# The Journal

OF THE

# Sri Sankaragurukulam

## Srirangam

VOL. II. APRIL—JUNE 1940 NO. 5.



Editor .
[G]urubhaktasikhamani,
[Sas]trapras[a]rabhushana,
[K.] BALASUBRAHMANYA AIYAR.
B. A,
[Fo]under, Sri Sankara-
[gu]rukulam, Srirangam.







Literary Adviser ;
Vidyasagara,
Vidyavacaspati,
P. P. SUBRAHMANYA SASTRI,
B. A (Oxon) M. A,
Curator, Govt.
Oriental Mss. Library,
& Professor of
Sanskrit, Presidency
College, Madras.



ANNUAL SUBSCRIPTION { INLAND Rs. 6/—Post Free.
FOREIGN SH. 12/—

ONTENTS.

**Original Articles.** P



**Rare & Hitherto Unpublished Works.**



*Continued in the Wrapper 3rd p*

श्रीशंकरगुरुकुलपत्रिका

॥ श्रीः ॥

या वर्णपदवाक्यार्थस्वरूपेण विवर्तते । अनादिनिधनाऽनन्ता सा मां पातु सरस्वती ॥
यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥

संपुटः २ ] विक्रमसंवत्सरश्रावणमासः [ संचिका ६



कस्त्वं कोऽहं कुत इह भगवान्कोऽयमत्र प्रपञ्चः
स्वान्तर्वेद्ये गगनसदृशे पूर्णतत्त्वप्रकाशे ।
आनन्दाख्ये समरसघने बाह्यमन्तर्विलीने
निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ॥





॥ श्रीगुरुभ्यो नमः ॥

# ॥ आचार्यविजयस्तवराजः ॥

मथुरापुरीवास्तव्येन व्याकरणसाहित्यशिरोमणिना

पं. श्रीरामनाथशास्त्रिणा विरचितः ॥

---

कर्पूराद्रिसमत्विषे जनिमतां संसारबन्धद्विषे
मिथ्याज्ञानमुषे परात्मविदुषे श्रीशंकराख्याजुषे ।
तुङ्गातीरमुपेयुषे कलयतां चेतःकुटीं जग्मुषे
विश्वत्राणपुषे नमोऽस्तु गुरवे तस्मै परंज्योतिषे ॥ १ ॥

आस्तिक्ये विहते स्थविष्ठमतिभिश्चार्वाकबौद्धादिभिः
श्रौतस्मार्तविधौ क्रमेण धरणौ लुप्ते सुधाशाः समम् ।
कैलासे यमुपेत्य साधु शरणं प्राहुः शरण्यं प्रभुं
तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ २ ॥

लोकस्थैर्यकृते श्रुतिस्मृतिपथाचारप्रतिष्ठाकृते
दुष्टोन्मूलनशिष्टपालनकृते सन्मार्गरक्षाकृते ।
संश्रुत्याशु निजावतारमवनौ यः सान्त्वयामास तां-
स्तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ ३ ॥

कर्मोपासनयोगसाधनपरिष्काराय कांश्चित्सुरा-
नादिक्षत्स्वयमेव भूरिकरुणस्तत्त्वज्ञानमुग्धाञ्जनान् ।
तत्त्वज्ञानमहोपदेशविधिना यश्चाद्दिधीर्षुः प्रभु-
स्तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ ४ ॥

यस्याज्ञामधिगम्य साह्यकरणे जिष्णुः सुधन्वाऽभवत्
स्कन्दो भट्टकुमारिलोऽजनि तथा पद्मोद्भवो मण्डनः ।
शेषश्चापि पतञ्जलिः समभवच्छ्रीशोऽपि संकर्षण-
स्तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ ५ ॥

अप्रामाण्यधियं श्रुतिस्मृतिवचःस्वालम्बिते दुर्मतै-
श्चार्वाकप्रमुखैः सुधन्वनृपतौ शैलान्निपत्याप्यधः ।
जीवन्यस्य बलात्कुमारिलगुरुः प्राचीकशत्तत्प्रमां
तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ ६ ॥

एवं सत्यथ केरलेषु महिते कालट्यभिख्ये तदा
ग्रामे शिष्टजनाग्रिमं शिवगुरुं नाम्ना तमार्यापतिम् ।
स्वध्यानैकरतं सुतेन रहितं वव्रे स्वतातं तु य-
स्तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ ७ ॥

पुत्रं सर्वगुणाढ्यमिच्छसि बहून्किं वा सुतान्दुर्गुणा-
नत्रेष्टं वरयेति यः शिवगुरुं चित्ते दधानं शिवम् ।
स्वप्ने तं शिवपूजनैकनिरतं पप्रच्छ विप्रोत्तमं
तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ ८ ॥

सत्पुत्राय वृतश्च तेन सुधिया जन्मादिहीनोऽपि यो
वैशाखे सितपञ्चमीतिथियुते श्रीशांभवे भे शुभे ।
आर्यागर्भतलात्समाविरभवत्तन्नाम चान्वर्थयं-
स्तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ ९ ॥

आख्यातो जनकेन शंकर इति प्रेम्णा प्रसन्नः स्वयं
सर्वज्ञोऽपि यथाविधानमखिलान्वर्णान्क्रमाद्ग्राहितः ।

विद्येशो विधिवच्छ्रुतीरधिजगे बन्धूपनीतः स्वयं
तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ १० ॥

भैक्ष्यं जातुचिदाचरन्नुपगतो यो दीनवृद्धागृहं
संशुष्कामलकीफलेन मुदितो दत्तेन भक्त्या तया ।
आराध्य स्तुतिभिः श्रियं च कनकैर्दीनां समन्वग्रही-
त्तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ ११ ॥

प्रातः स्नातुमुपेत्य जातु तटिनीं पूर्णां पवित्रोदकां
तत्पायस्यवतीर्ण एव चरणे ग्राहग्रहेणार्दितः ।
श्रुत्वा व्योम्नि गिरं तदा सपदि यः संन्यस्य मुक्तस्तत-
स्तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ १२ ॥

शापात्तं विनिमोच्य तेन विनुतो गन्धर्वराजेन यो
मात्रे तत्क्षणवेदितस्वचरितः सद्यस्तयाऽऽमोदितः ।
संन्यासं विधिवद्ग्रही क्रगमद्गोविन्दपादाश्रमं
तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ १३ ॥

दृष्ट्वा शर्मदनर्मदातटगते शान्तेऽतिपूताश्रमे
श्रीगोविन्दगुरुं शमादिमगुणैः संपन्न आराध्य यः ।
पृष्टस्तेन च कस्त्वमित्यधिकृतेः सम्यक्परीक्षाकृते
तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ १४ ॥

एवं तेन परीक्षितश्च दशभिः पद्यैर्भुजंगाभिधै-
र्यो भूतेन्द्रियवर्गमानसवचोऽतीतः शिवः केवलः ।
स्वात्मेत्युत्तममुत्तरं ह्यभिदधे श्रुत्यन्तसिद्धान्तितं
तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ १५ ॥

श्रुत्वा तद्वचनं प्रमोदभरितात्तस्माद्गुरोः प्रश्रितः
संन्यासं प्रणवोपदेशमपि यः स्वीकृत्य तस्याज्ञया ।
नद्यम्भःपरिपूरितस्वकरकः काशीं ययौ संयमी
तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ १६ ॥

आगाधस्य परीक्षणाय भगवान् चण्डालरूपः शिवो
यस्त्वं याहि सुदूरमित्यभिदधद्वादैः प्रबुद्धस्ततः ।
चण्डालद्विजयोः समां निजमतिं ह्यात्मैक्यतोऽबोधय-
त्तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ १७ ॥

स्वीकुर्वन्निजरूपमाशु भगवान्चन्द्रार्धचूडामणिः
कैलासाद्रिसमं वृषं समधिरुह्याविर्भवन्नग्रतः ।
यज्ज्ञानं प्रशशंस भाष्यरचने संचोदयामास यं
तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ १८ ॥

यः काश्यां मणिकर्णिकातटगतः श्रीविश्वनाथेश्वरे-
णादिष्टः श्रुतिमौलिसूत्रवचसां भाष्यं प्रणेतुं परम् ।
प्रस्थानत्रयभाष्यतत्प्रकरणस्तोत्राण्यकार्षीद्यति-
स्तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ १९ ॥

गङ्गायास्तटमुत्तरं प्रति गतः शिष्यस्तु यस्याज्ञया
प्रत्यावृत्य विलोक्य तां शुभमतिः पूर्णप्रवाहां नदीम् ।
उत्क्षिप्तेषु तयाऽम्बुजेषु चरणौ न्यस्यन्नतारीद्द्रुतं
तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ २० ॥

यः साक्षात्सनकादियोगिमहितश्रीदक्षिणामूर्तिवत्
श्रीमत्पद्मपदादिभिः परिवृतः शिष्यैर्हितैः सद्गुणैः ।

व्यासोपस्तुतभाष्यभावगरिम्णा प्रापाधिकायुस्तत-
　　स्तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ २१ ॥

काश्मीरं समुपेत्य शिष्यसहितः सर्वज्ञपीठं समा-
　　रोढुं तत्र च कर्ममार्गनिरतं जित्वा गुरुर्मण्डनम् ।
संन्यस्तं विदधे पणानुसरणान्नाम्ना सुरेशं च य-
　　स्तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ २२ ॥

तद्भार्योभयभारती स्मरकलावादे यमाकारय-
　　ज्जेतुं तामपि मासमेकमवधिं दत्त्वाऽनभिज्ञो रतेः ।
प्राप्तुं तत्र च कौशलं मृतनृपस्याविष्टुमैच्छत्तनौ
　　तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ २३ ॥

दृष्ट्वा तत्र मृतं नृपं ह्यमरुकं दाहाय नीतां तनू-
　　माविक्षन्निजसूक्ष्मदेहकरणैर्योगप्रभावेन यः ।
आनीतश्च स जीवतीति सचिवै राष्ट्रे रतौ संस्तुतः
　　तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ २४ ॥

शुद्धान्तस्थितसुन्दरीभिरनुभूयावेदितेऽन्यादृशे
　　दाक्ष्ये कामकलासु नीतिषु तथा संदिह्य तं मन्त्रिणः ।
ज्ञात्वा योगिविचेष्टितं स्थिरनृपं कर्तुं यमैच्छंस्तदा
　　तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ २५ ॥

योगी यश्च तदा स्वशिष्यनिवहैर्गुप्तां तनूमात्मन-
　　स्तस्यामात्यजने विचित्य सुचिरं दग्धुं प्रवृत्ते सति ।
शिष्यैर्गीतिनिवेद्यमानविषयः स्वीयां तनूमाविश-
　　त्तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ २६ ॥

आविश्य स्वतनुं विलोक्य च कराद्यङ्गं प्रदग्धं तदा
 यो लक्ष्मीनृहरेः स्तुतस्य कृपया प्राप्तः करालम्बनम् ।
सद्यः सुन्दरविग्रहः पुनरगाद्वादे विजेतुं च तां
 तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ २७ ॥

जित्वा तामपि कामतन्त्रविषये शापाच्च दुर्वाससो
 मुक्तामाशु विधाय संयमिवरः पूज्यां परां देवताम् ।
जित्वाऽन्यानपि वादिनः समभजत्सर्वज्ञपीठं च य-
 स्तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ २८ ॥

स्वातन्त्र्यं प्रकटय्य तीक्ष्णधिषणः सर्वेषु तन्त्रेषु य-
 स्तामानीय सहैव मस्करिवरस्तुङ्गातटे भास्वरे ।
शृङ्गेरीनगरे नवालयवरे तस्याः प्रतिष्ठां व्यधा-
 त्तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ २९ ॥

मात्रा चिन्तित एव पूर्ववचनाद्भक्त्या समायातो
 दृष्ट्वा तां जननीं मृतां यतिपतिः संस्कृत्य तस्यास्तनुम् ।
संप्रैषीत्परमं हरेः पदमहो तां देवयानेन य-
 स्तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ ३० ॥

पश्चाद्दिग्विजयाय दिक्षु विचरन् शिष्यैः परिव्राट्पतिः
 दुर्वादिद्विरदालिकुम्भदलने पञ्चाननप्रक्रमः ।
वेदाध्यायमुखोपदेशवचनैः प्राचारयद्वैदिकं
 तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ ३१ ॥

काञ्च्यां मन्त्रविदां वरः करुणया कर्मन्दिनामग्रणीः
 कामाक्ष्याः सकलार्थदोहनकलां श्रीकामधेनोरपि ।

प्रत्यस्थापयदात्मनैव जनताभद्राय चक्रोत्तमं
तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ ३२ ॥

प्राच्यादिष्वपि दिक्षु यश्च सुमठानाम्नायनाम्ना व्यधा-
द्यश्चैतेषु चतुर्षु साधु चतुरः शिष्यान्प्रतिष्ठाप्य तैः ।
सम्यग्वैदिकमार्गमेषमतपथान्प्रासारयत्सर्वत-
स्तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ ३३ ॥

शिष्टानुष्ठितयज्ञकर्मसु हविर्भागैः सुरान्प्रीणय-
न्नज्ञानं व्यपनोदयंश्च वचनैर्यस्तत्त्वमस्यादिभिः ।
निर्वर्त्यैव निजावतारफलमप्याप स्वधाम प्रभुः
तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ ३४ ॥

आचार्यस्तवराज एष रचितो भक्त्या मया सद्गुरोः
श्रीमच्छंकरपूज्यपादचरितोपन्यासरूपो नवः ।
यद्भक्त्या पठितः सदा वितनुते सन्मङ्गलानि ध्रुवं
तस्मै श्रीगुरवे नमो भगवते श्रीशंकराख्याभृते ॥ ३५ ॥



# ॥ श्रीमदाचार्येन्द्रस्तवः ॥

श्रीमत्परमहंसेत्यादि समस्तबिरुदालंकृत शृङ्गगिरि श्रीजगद्गुरु श्री (१००८)

श्री चन्द्रशेखरभारतीस्वामिभिः विरचितः ॥

दृष्ट्वा वाचि सरस्वतीं नयनयोरन्ते च लक्ष्मीं तथा
चित्ते वीक्ष्य समस्तभूतकरुणां काये च हेमप्रभाम् ।
नो युक्तं बहुभामिनीसमुदये वासाय मत्त्वेति ते
श्रीमद्देशिकराज कीर्तिवनिता नूनं दिगन्तानगात् ॥ १ ॥

पुरा शंभुः शुभ्रे वसतिमचले कर्तुमनिशं
समिच्छन्रूप्याद्रावुभयगुणयुक्तेऽकृत वसिम् ।
ततस्तं दुर्वर्णं दशवदनहस्तप्रचलितं
विचिन्त्यास्मिन्नित्यां वसतिमकरोद्देशिकहृदि ॥ २ ॥

अमृतशिलापरिनिर्मितमूर्तिं श्रीदेशिकस्य मन्येऽहम् ।
शंकरगुरुकृतशृङ्गाचलस्थपीठीयकीर्तिसार इति ॥ ३ ॥

एकादशरुद्राणामेका गौरी भवेन्नालम् ।
इति गौरीकृतवांस्त्वं देशिकवर दश दिशोऽपि निजकीर्त्या ॥ ४ ॥

प्रह्लादपोषकत्वं तव सिद्धमथो हिरण्यवैरित्वम् ।
तस्मान्नृसिंहदेशिक हृत्स्तम्भं मे विभिद्य पुर एहि ॥ ५ ॥

सर्वज्ञतासकलशक्तियुतत्वहेतोः
श्रीशंभुसाम्यमखिला भवतो वदन्ति ।
आधिक्यमेव तव देशिक संगिरेऽहं
राजाङ्घ्रिरस्ति हि भवान् स तु राजमौलिः ॥ ६ ॥

---

## ॥ श्रीकृष्णपञ्चरत्नम् ॥

श्रीमत्परमहंसत्यादिबिरुदावलीसमलंकृत हरिहरपुरमठाधीश्वर

श्रीमदभिनवस्वयंप्रकाशरामानन्दसरस्वतीस्वामिभिः विरचितम् ॥

वामे राधा दक्षिणे रुक्मिणी च हस्ते वेणुः सर्वतः साधुगावः ।
इत्थं योऽसौ चिन्त्यते योगिवृन्दैः सोऽयं पायान्मामपायान्मुरारिः ॥ १ ॥

नवनववरमुक्ताहारधारी मुकुन्दो मुनिजनहृदयाब्जे वासशीलः सुशीलः ।
कलिपुरुषनियन्ता कंसचैद्यादिहन्ता मम मनसि वसन्तं ध्वान्तराशिं विहन्तु ॥ २ ॥

कौमोदकीकमलशङ्खसुदर्शनानि हस्तैश्चतुर्भिरतुलैरनिशं दधानम् ।
कन्दर्पकोटिकमनीयशरीरकान्तं कृष्णं कृपाजलनिधिं शरणं गतोऽस्मि ॥ ३ ॥

संसाराध्वनि पुत्रबान्धवयुते मन्मानसं मापते
मा गच्छत्विति सन्ततं तव विभो संप्रार्थये संनिधौ ।
ऋक्सामादिसमस्तवेदनिवहैः शास्त्रैश्च संस्थापितं
सच्चिद्रूप तवाङ्घ्रिसेवनविधौ मच्चित्तमासज्यताम् ॥ ४ ॥

श्रीगोवर्धनमेदिनीधरधरो राधाधवो माधवो
धर्माधर्मविबाधनैकनिरतो धाराधरश्यामलः ।
धीरोत्तंसधराधिपैर्निरवधि श्रीमद्भिराराधितो
मेधां मे मधुमर्दनो विपुलयन्बोधं विधत्तां हृदि ॥ ५ ॥

स्वयंप्रकाशाभिनवरामानन्दसरस्वती ।
श्रीकृष्णपञ्चरत्नाख्यस्तुतिमेनां जगौ मुदा ॥ ६ ॥

---

# ॥ ख्यातिवादः ॥

कल्याणपुरी श्रीशंकरपाठशालाध्यक्षेण वेङ्कटेशशास्त्रिणा विरचितः

(पूर्वतोऽनुवृत्तः)

— —

अन्ये पुनः— गृह्यमाणयोरेव शुक्तिरजतयोः भेदाग्रहिपरिकल्पितं एकमेव विज्ञान विभ्रमशब्देन कथ्यते। तथा हि— रजतसंस्कारदोषसहितमिन्द्रियं शुक्तिशकलेन संयुक्तं, शुक्तीदमंशविषयकं तयोः संसर्गमसंसर्गं वा अनवगाहमानमेकमेव सविकल्पज्ञानमुत्पादयति। एवं चोभयोरपि एकज्ञानविषयत्वात् तयोरसंसर्गाग्रहाच्च अयथार्थव्यवहारः। विवेकज्ञानानन्तरं तादृशव्यवहारबाधात विवेकज्ञानं बाधकं कथ्यते। इयमेव प्रक्रिया शुक्तिरजतज्ञानस्थले; न तु तार्किकादिवत् अन्यस्यान्यात्मना भानमिति मन्यन्ते॥

अस्मिन्नख्यातिपक्षे प्रभाकरमतानुयायिना शालिकनाथेन स्वकीयप्रकरणपंचिकायां नयवीथ्याख्यप्रकरणे—

> यथार्थं सर्वमेवेह विज्ञानमिति सिद्धये।
> प्रभाकरगुरोर्भावः समीचीनः प्रकाश्यते॥
>
> विद्यमानवस्तुरूपग्रहणे प्रतिबन्धृता।
> दोषाणामुपपन्नेति भ्रान्तिग्रहनिबन्धता॥

इत्यन्तैः पद्यैरुपपत्तयो महता परिकरेण अभ्यधीयन्त। ताश्च वाचस्पतिमिश्रविवरणाचार्यजयतीर्थप्रभृतिभिः समगृह्यन्त। ताश्च किंचिदिवात्रोपपादयामः॥

अन्यत्र विद्यमानरजतं पुरोवर्तिनि भासत इति खल्वन्यथाख्यातिवादिनो वदन्ति। तन्न युक्तम्। अन्याकारज्ञानस्यान्यालम्बनत्वस्यानुभवविरुद्धत्वेनासंभवात्। न च शुक्तिः सत्तामात्रेण रजतज्ञानस्यालम्बनमिति वक्तुं शक्यम्। सर्वेषामप्यर्थानां सत्त्वाविशेषेणालम्बनत्वप्रसङ्गात्। नापि कारणत्वेन; इन्द्रियाणामपि तथात्वात्। एवं च भासमानत्वमेव आलम्बनत्वमिति वक्तव्यम्; तथा च पूर्वोक्तानुभवविरोधस्तदवस्थः॥

किं चेन्द्रियाणां यथार्थज्ञानजननसामर्थ्यं दृष्टम्; अतस्तेभ्यो मिथ्याज्ञानस्य कथं प्रसक्तिः? तथा च असदात्मख्यात्यनिर्वचनीयख्यातीनामसंभवः। दोषोपहतेन्द्रियाणां मिथ्याप्रत्ययोत्पादनसा-

मर्थ्यमिति चेत्— उच्यते । दोषाणां सहजकार्यजननसामर्थ्यप्रतिबन्धः परं दृष्टः; न तु विपरीतकार्यजननसामर्थ्यम् । भस्मकादिदोषाणामपि जाठराग्निगतरसनिष्पादनसामर्थ्यविघात एव, न तु कार्यान्तरोपजननसामर्थ्याधायकत्वम् । तदुक्तं शालिकनाथेन—

अयथार्थस्य बोधस्य नोत्पत्तावस्ति कारणम् ।
दोषाश्चेन्न हि दोषाणां कार्यशक्तिविघातिता ॥

भस्मकादिषु कार्यस्य विघातादेव दोषता ।
अग्नेर्हि रसनिष्पत्तिः कार्यं जठरवर्तिनः ॥ इति ।

किं च;

अहो बत महानेष प्रमादो धीमतामपि ।
ज्ञानस्य व्यभिचारेण विश्वासः किंनिबन्धनः ॥

इति शालिकनाथोक्तरीत्या केषांचिज्ज्ञानानां व्यभिचारित्वे सर्वत्र व्यभिचारसंदेहेन प्रवृत्त्यादिकार्याभावः प्रसज्येत । तथा चेदं रजतमित्यत्र ग्रहणस्मरणे द्वे एव ज्ञाने । तयोः पूर्वोक्तरीत्या विषयतः स्वरूपतश्च भेदाग्रह एव पुरोवर्तिनि प्रवृत्तिं प्रति कारणत्वेनाभ्युपगम्यते । स्मरणस्य गृहीतांशप्रमोषः अभ्युपगम्यते । तदुक्तं नयवीथ्याम्—

ग्रहणस्य विशेषो हि गृहीतग्रहणं स्मृतिः ।
सा गृहीतांशमोषेण गृहीतिरिति तिष्ठति ॥ इति ।

एवं पीतः शंखः इत्यत्र ग्रहणस्मरणे एव स्वरूपतः अगृहीतभेदे । नयनरश्मिगतनिःपित्तद्रव्यस्य पीतिमा परं गृह्यते; न तु पित्तद्रव्यम् । शंखश्च दोषवशात् शुक्लगुणराहित्येन गृह्यते । तथा चानयोः शङ्खपीतिम्नोः भेदाग्रहात् पीतः शङ्ख इत्यभेदव्यवहारः । तदप्युक्तं नयवीथ्याम्—

पीतशंखावबोधे च पित्तस्येन्द्रियवर्तिनः ।
पीतिमा गृह्यते द्रव्यरहितोऽश्मिव तिग्मता ॥

शंखस्येन्द्रियदोषेण शुक्लिमा च न गृह्यते ।
केवलं द्रव्यमात्रं तु प्रथते रूपवर्जितम् ॥

गुणे द्रव्यव्यपेक्षे च द्रव्ये च गुणकाङ्क्षिणि ।
भासमाने तयोर्बुद्धिरसंबन्धं न बुध्यते ॥

सत्यपीतावभासेन समे भातो मती इमे ।
व्यवहारोऽपि तत्तुल्य एवमत्रापि युज्यते ॥ इति ।

तस्मात्सर्वे प्रत्यया यथार्थाः, प्रत्ययत्वात्संप्रतिपन्नप्रत्ययवत् ।

इमं पक्षं सत्ख्यात्यसत्ख्यात्यन्यथाख्यातिवादिनो लक्ष्मणाचार्यजयतीर्थतार्किकप्रभृतयो नानुमोदन्ते । तथा हि— रजतार्थिनः इदं रजतमिति प्रत्ययात् पुरोवर्तिनि शुक्तिकादौ प्रवृत्तिः सर्वसंप्रतिपन्ना । न चेदं द्वयमपि भेदाग्रहाभावमात्रात् भवितुमर्हति, प्रवृत्तिव्यवहारौ प्रति ज्ञानस्य कारणत्वमिति सर्वतीर्थकरसंमतत्वात् । न च स्वरूपतो विषयतश्च अगृहीतभेदके ग्रहणस्मरणे एव प्रवृत्तिव्यवहारौ प्रति कारणत्वेनाभ्युपगम्येते; अगृहीतभेदत्वेन, प्रवृत्त्यादिहेतुत्वाभिमतसत्यरजतज्ञानसादृश्यस्यानयोरपि सत्त्वादिति वाच्यम् । अतः तच्च सादृश्यं गृह्यमाणं सत् प्रवृत्त्युपयोगि सत्तामात्रेण वा? आद्येऽपि इमे ज्ञाने तत्सदृशभूते उत अनयोर्ज्ञानयोः स्वरूपतो विषयतश्च भेदाग्रह इति वा ज्ञानाकारो वक्तव्यः । न तावदाद्यः । अन्यत्र अन्यसादृश्यज्ञानात् तदर्थिनः प्रवृत्तेरदृष्टचरत्वात् । न हि गवार्थी गोसादृश्यज्ञानेन गवये प्रवर्तते । द्वितीयेऽनयोर्भेदाग्रह इति ज्ञानं व्याहतम् ॥

अतः भेदाग्रहरूपसादृश्यं सत्तामात्रेण प्रयोजकमिति वक्तव्यं । तथा च भेदाग्रहः शुक्तौ रजतारोपक्रमेण प्रवृत्त्याद्युपयोगी उत अन्यथापि सम्भवतीति विचार्यमाणे चलनप्रवृत्तिव्यवहारौ प्रति ज्ञानस्य हेतुत्वेन सर्वसंप्रतिपन्नत्वात् शुक्तौ रजतारोप अवश्यमभ्युपेयः । न च अगृहीतभेदकग्रहणस्मरणपूर्वको व्यवहारः अभ्युपेयते । भेदाग्रहस्य तु ग्रहणस्मरणविशेषणत्वं परमभ्युपगम्यते; न तु प्रवृत्त्यादिहेतुत्व अतो न दोष इति वाच्यं । यतः रजतस्मरणं प्रवृत्तौ नापयुज्यते, इदंकारास्पदाभिमुखत्वात् प्रवृत्तेः । तद्विषयकेच्छाभावे तद्विषयिणी प्रवृत्तिरसङ्गता । ननूक्तं रजतभिन्नत्वेन अग्रहणात्तत्र प्रवृत्तिरिति । तर्हि रजतत्वेनाग्रहणात् कुतो न निवृत्तिः? तस्मात् प्रवृत्तिनिवृत्तिभ्यां युगपदाकृष्यमाणश्चेतनो दुरवस्थामेव प्राप्नुयात् । अतः तत्परिहाराय शुक्तौ रजतं समारोप्यैव प्रवृत्तिरुपपादनीया । यश्च पीतशङ्खज्ञानोत्पादनप्रकार उपपादि, स च सत्ख्यातिविमर्शकाल एव सुतरां विमृष्ट इति नेह प्रतन्यते । किं च इष्टभेदाग्रहाभावविशिष्टपुरोवर्तिज्ञानस्य प्रवर्तकत्वे सत्यरजतस्थले पुरोवर्तिनि इष्टभेदाप्रसिद्ध्या उभयसाधारण्यानुरोधेन परिष्कारान्तरानुसरणे बहूनां दोषाणां संभव इत्यंशः परिमले स्पष्टः । किं च स्मरणाभिमानाख्यातिपदार्थानिर्वचनमपि दुःशकमिति पञ्चपादिकाविवरणयोः स्पष्टम् । न्यायसुधायां जयतीर्थैः अन्येऽपि दोषा उद्भाविताः, विस्तरभयान्नेह कथ्यन्ते । तस्मादन्यस्य अन्यात्मकतया भानमेव भ्रमस्थलेऽभ्युपगन्तव्यमिति अन्यथाख्यातिमध्येऽन्तर्भावावश्यकत्वेन, तस्यापि पक्षस्य क्षोदक्षमत्वाभावेन अनिर्वचनीयख्यातिकुक्षावेवान्तर्भावावश्यकतेत्यास्तां विस्तरः ॥

अतः परं अन्यथाख्यातिविमर्शः क्रियते। तस्मिन् विमृश्यमानेऽपि स पक्षः क्षोदक्षमो न भवति । अन्यथाख्यातिपक्षं च भट्टवैशेषिकनैयायिकादयः अभ्युपगच्छन्ति ॥

तस्माद्यदन्यथा सन्तमन्यथा प्रतिपद्यते ।<br>
तन्निरालम्बनं ज्ञानमभावालम्बनं च तत् ।<br>
भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात् ॥

इति निरालम्बनमतोक्तकारिकाविमर्शने भट्टानामित्थमभिप्रेतमवगम्यते— अन्यथा शुक्तिकारूपेण विद्यमानं अर्थं अन्यथा रजतादिरूपेण यज्ज्ञानमवगाहते तदेव निरालम्बनशब्देन व्यवहर्तुं योग्यम्; न तु ज्ञानव्यतिरिक्तविषयशून्यमिति। इदमेव ज्ञानं अन्यथाख्यातिविपरीतख्यात्यादिशब्दप्रतिपाद्यम्। नैयायिकपक्षादस्मिन् भट्टमतेऽयं विशेषः—

> मा भूतामिति तेनाहं लोकसिद्धं सदित्ययम्।
> न लोकव्यतिरिक्तं हि प्रत्यक्षं योगिनामपि॥

इत्युक्तरीत्या योगिप्रत्यक्षानभ्युपगमेन तुल्यन्यायतः तार्किकाभिमतालौकिकप्रत्यक्षसामान्यस्याप्यनङ्गीकारात्। तार्किकवत् देशान्तरसंनिकृष्टरजते ज्ञानलक्षणसंनिकर्षस्य वक्तुमशक्यत्वात्। दोषतश्चाप्रमाणत्वे स्वतःप्रामाण्यवादिनां गुणज्ञानानवस्थावत् न दोषेषु प्रसज्यते इत्याद्युक्तरीत्या दोषमहिम्नैव असंनिकृष्टरजतस्य पुरोवर्तिदेशे भानम्। किं चास्मिन्मतेऽयं विशेषः— सर्वं हि वस्तु सदसदात्मकम्। तत्र शुक्तिरजतज्ञानं शुक्तिकाख्यं भावं शुक्तिकारूपेण सद्रूपम्, रजतरूपभावान्तरस्य यत् सद्रूपं रजतात्मकं तदात्मना शुक्तिकामवगाहमानं भ्रान्तं भवति। कुत इति चेत्, उच्यते— शुक्तिकायां द्वे रूपे—भावरूपं अभावरूपं चेति। तत्र भावरूपं शुक्तिकात्मकं, अभावरूपं रजतात्मकम्। एवं रजतस्यापि द्वे रूपे—सद्रूपं असद्रूपं चेति। तत्र भावरूपं रजतात्मकम्, अभावरूपं शुक्त्यात्मकम्। तत्र रजतस्य यद्भावरूपं तदात्मना शुक्तिग्रहणे भ्रान्तिरेव। नेदं रजतमित्यत्र रजतस्य अभावात्मना शुक्तिग्रहणादभ्रान्तिः। न च शुक्तेः भावाभावोभयात्मकत्वात् रजतरूपाभावात्मना ग्रहणे कथं भ्रान्तिरिति वाच्यम्। यतो न हि वयं सदसदुभयात्मकमित्यस्य एवमर्थं वर्णयामः; किं तु स्वरूपेण शुक्तिः सदात्मिका, रजतरूपपरात्मना असदात्मिका। एवं च रजतप्रतियोगिकाभावात्मिका इत्येवार्थः। ननु रजतमेव शुक्त्यंशभूतासदात्मभूतम्। भावान्तरमभाव इत्यस्यापि शुक्तिप्रतियोगिकाभावत्वेन रजतप्रतियोगिकाभावत्वेन लोकसिद्धः पदार्थः। स वैशेषिकादिकवत् सप्तमः पदार्थो न; किं तु रजतशुक्त्यादिकं भवितुमर्हति। एवं च शुक्ति रजतरूपभावात्मना अवगाहि ज्ञानं भ्रान्तिः, शुक्त्यात्मकरजतप्रतियोगिकाभावात्मनाऽवगाहि ज्ञानं समीचीनमिति।

वैशेषिकादयस्तु इत्थमाभाषन्ते—पुरोवर्तिज्ञानानन्तरं सादृश्यात् रजतस्मरणे तादृशस्मरणरूपज्ञानप्रत्यासत्त्या चक्षुरादिसन्निकृष्टं रजतं रजतत्वं वा अभेदेन समवायेन वा पुरोवर्तिदेशे दोषवशाद्भासते। नव्यनैयायिकादयस्तु उपनयसंनिकर्षप्रयोज्यविषयत्वस्य लौकिकत्वासंभवेन, अत्र रूप्यं साक्षात्करोमीत्याकारकत्वप्रयोजकसाक्षात्कारिताव्यञ्जकविषयितायास्तत्र असंभवापत्त्या तदाकारस्यानुपपत्तेः दोषविशेषाणामेव भ्रमीयलौकिकविषयत्वे नियामकत्वमभ्युपगच्छन्ति। एवं भट्टनव्यनैयायिकयोः अस्मिन्नंशे साम्यं वर्तते। उपपत्तिं चैवं वर्णयन्ति— अख्यातिमतोक्तरीत्या भेदग्रहाभावस्य प्रवृत्तिकारणत्वासंभवेन पुरोवर्तिदेशे प्रवृत्त्यादिव्यवहारान्यथानुपपत्त्या, एकज्ञानस्यावश्यकत्वात्। दुष्टेन्द्रियाणामपि दावाग्निदग्धवेत्रबीजेषु कदलीकाण्डजनकत्ववत्, भस्मकदुष्टजाठराग्नेः रसनिष्पत्तिकार्यप्रतिबन्धपूर्वकं बह्वन्नपचनसामर्थ्यवत्, समीचीनज्ञानप्रतिबन्धपूर्वकं भ्रमज्ञानजननसामर्थ्य-

मव्याहतम्। तत्र असतः ख्यात्यसंभवात् शुक्तिदेशे रजतस्य वक्तुमशक्यत्वाच्च अर्थाद्देशान्तरस्थमेव रजतं दोषवशात् शुक्तिदेशे भासते इत्यभ्युपगन्तव्यम्। किं च विमतं रजतज्ञानं पुरोवर्तिविषयं, रजतार्थिनः तत्र नियमेन प्रवर्तकत्वात् उभयसिद्धसमीचीनज्ञानवत्। न चान्याकारज्ञानस्यान्यालम्बनत्वेऽतिप्रसङ्ग इति वाच्यम्। यतो न हि वयं शुक्तित्वं आलम्बनं वदामः; किं तु इदमंशमात्रम्। तस्याप्यनालम्बनत्वेऽनुभवविरोधः। इदं रजतमित्यनुभवन् पुरोवर्तिवस्तु अङ्गुल्यादिना निर्दिशति; अतो न दोषः। न च ज्ञानस्य व्यभिचारे सर्वत्रानाश्वास इति वाच्यम्। यतो भट्टमते नायं दोषः प्रसज्यते। तेषां मते बोधकत्वेनैव प्रामाण्यं न त्वव्यभिचारित्वेन। नैयायिकमतेऽपि नायं दोषः। भवता खलु यत्र कुत्रापि व्यभिचारं दृष्ट्वा, सत्यरजतज्ञानमपि मिथ्या, प्रत्ययत्वात् शुक्तिरजतप्रत्ययवत् इति सामान्यानुमानेनाप्रामाण्यं साधनीयम्। तत्र दोषजन्यत्वं उपाधिः। न च तदपि आपाद्यसाधनव्यापकत्वं कथ्यते इति वाच्यम्। तत्रापि बाधकज्ञानवत्त्वस्योपाधित्वात्। तदपि आपाद्यते चेदनुभवविरोधः। जयतीर्थास्तु—'अन्यथाख्यातौ किं प्रमाणमिति चेत् अनुभव एवेति ब्रूमः' इत्यादिग्रन्थेन इत्थं अन्यथाख्यातिं समर्थयामासुः। शुक्तिशकले इदं रजतमित्येकमेव ज्ञानं सत्यरजतज्ञानवत् स्वप्रकाशतया, मानसप्रत्यक्षविषयतया, साक्षिणा वा अवभासते। सत्यरजतज्ञानादस्य मात्रयाऽपि विशेषं न पश्यामः। यदि विशेषः, तर्हि रजतार्थिनः पुरोवर्तिशुक्तिशकले प्रवृत्तिर्न स्यात्। अनुभवसिद्धज्ञानापलापे अख्यातिवाद्यभिमतस्मृतिग्रहणापलापप्रसङ्गः। किं च रजतार्थिनः शुक्तिशकलप्रवृत्त्यन्यथानुपपत्तिरूपार्थापत्तिप्रमाणेनापि अन्यथाख्यातिः सिध्यति। न चेयमन्यथानुपपत्तिः स्वरूपतो विषयतश्च अगृहीतभेदज्ञानद्वयात् निवारयितुं शक्यत इति वाच्यम्, भेदस्यैव दुर्निरूपत्वादिति॥

इमं च पक्षं अख्यात्यादिवादिनो नानुमन्यन्ते। तथा हि– अन्यत्र स्थितस्य रूप्यस्य पुरोवर्तिनि भानादन्यथाख्यातिसमर्थनमयुक्तम्; तदा असत्ख्यातिपक्षोक्तदोषप्रसरात्, पुरोवर्तिदेशे पक्षद्वयेऽपि असत्त्वाविशेषात्, पक्षद्वयेऽपि अपरोक्षप्रतीतिप्रयोजकसंनिकर्षानुपपत्तेस्तुल्यत्वात्। न च संस्कारस्मृतिदोषाणां प्रत्यासत्तित्वम्, रजतप्रत्यक्षसामान्यं प्रति रजतेन्द्रियसंनिकर्षस्य कारणत्वनिश्चयात्। न च लौकिकप्रमाप्रत्यक्ष एव तस्य कारणत्वम्, अस्य विभागस्य नैयायिकगोष्ठ्यामेव शोभार्हत्वात्, कार्यकारणभावगौरवात्; एवमपि निर्विकल्पकप्रत्यक्षे संयोगस्य अकारणत्वप्रसङ्गाच्च। किं च चक्षुःसंयोगस्य प्रत्यक्षप्रमात्वप्रयोजकत्वे पुरोवर्तिदेशे रङ्गरजतसत्त्वकाले वैपरीत्येन इमे रजतरङ्गे इति समूहालम्बनभ्रमस्य रजतरङ्गसंनिकर्षजन्यत्वात् प्रमात्वापत्तिः। जयतीर्थप्रभृतयः केयमन्यथाख्यातिरिति श्रुतप्रकाशिकाकारवत् बहुधेमं पक्षं निराकार्षुः। विस्तरभयान्नेह लिख्यते। स्याद्वादपक्षं बहुप्रमाणविरोधादनुभवविरोधाच्च तत्खण्डनाय नादरः क्रियते इत्यास्तां तावत्।

एवं च तत्तद्वाद्यभिमतयुक्तीनां परस्परमक्षोभ्यत्वात् सुन्दोपसुन्दन्यायेन सत्पक्षमसत्पक्षं च विहाय अनिर्वचनीयपक्ष एव आदरणीय इति। श्रीहर्षाचार्यास्तु स्वकृतखण्डनखण्डखाद्ये ग्रन्थे प्रथमपरिच्छेदे अनिर्वचनीयतावादे प्रपञ्चानिर्वाच्यत्वमाक्षेपसमाधानाभ्यां एवं समर्थयामासुः। यत्तु प्रपञ्चनिर्वचनासामर्थ्ये गुरूपासनं क्रियताम्, ते शिक्षयेरन्निति; तन्न। यदि वयं वक्तृदोषात्

दृश्यनिर्वचनासामर्थ्यं ब्रूमः, तदैवं स्यात्। दृश्यत्वभागानुगामिन्येवेयमनिर्वचनीयतेत्येव ब्रूमः। यो हि दृश्यं निर्वचनार्हमित्यभिमन्यते तस्माम्, तर्हि निर्वक्तु; तत्तु परं न संभवति, सत्त्वासत्त्ववादिनोः परस्परमक्षोभ्ययुक्तीनां जागरूकत्वात्। न च सर्वदृश्यानिर्वचनीयत्वं तत्साधकयुक्तीनामप्यनिर्वाच्यत्वात् कथं तत्साधकत्वमिति वाच्यम्। यतो वयं युक्तिभिर्निर्वचनीयत्वं खण्डयामः न तु अनिर्वचनीयत्वरूपं किंचित्साधयामः। ताश्च युक्तयो निर्वचनानर्हा इत्यत्र कथ्यते, तैरेव व्यवहारस्यापि संभवात्; न तु व्यवहारसाधनकोटौ सत्त्वासत्त्वे निवेश्येते। हेतुतद्बहिर्भूतसत्त्वासत्त्वकथा वृथा, इति विद्यासागरैरुक्तत्वात्। यत्तु न्यायालङ्कारग्रन्थे अनिर्वाच्यत्ववादे इत्थं दूषणमभाणि— 'ननु सदसत्पक्षदोषदृष्ट्या दृश्यानिर्वाच्यत्वं ब्रुवाणस्य ते दृश्ये सदसत्त्वसंशयः, उत सदसत्त्वबहिर्भावो वा? आद्ये दृश्ये एकतरकोट्या भाव्यम्, अन्यथा संशयासंभवात्। तत्रापि सत्त्वपक्षाभ्युपगमे सत्त्वपक्षोक्तदोषा न प्रसरेयुः। यद्यसत्त्वपक्षोऽभ्युपगम्येत, तदा सर्वासत्त्वे दोषस्याप्यसत्त्वात् असद्भिर्दोषैः कथमनिर्वाच्यत्वं साध्यते। न द्वितीयः, व्याघातात्' इति, तदेतत् भावानवबोधेन प्रत्यवस्थानम्। यो हि सर्वदृश्यानिर्वाच्यत्वं ब्रूते, स कथं कस्यचन व्यवस्थापने पर्यनुयुज्येत। अनिर्वाच्यताया अपि निर्वक्तुमशक्यत्वमित्येव कथ्यते। एवं खलु अनिर्वचनीयवादी वदति। सर्वस्य निर्वचनप्रतिक्षेपादनिर्वाच्यत्वम्, न तु यस्य कस्यापि सत्त्वं वा असत्त्वं वा व्यवस्थापयति। परकीयरीत्या अनिर्वचनीयत्वं विश्वस्यतीति कथ्यते। वस्तुतस्तु वयं प्रपञ्चसत्त्वव्यवस्थापनविनिवृत्ताः स्वतःसिद्धे वेदात्मनि ब्रह्मतत्त्वे केवले निर्भरमवलम्ब्य चरितार्थाः सुखमास्महे॥



'शूद्राद्विप्राङ्गनायां तु चण्डालो नाम जायते ।' इति ।

'पुमान्न देवो न पशुर्न नरो न च पादपः ।'

इति विष्णुपुराणे च मनुष्यत्वादीनामात्मनि प्रतिषेधात्तद्विशेषरूपं ब्राह्मणत्वादिकमप्यर्थात् प्रतिषिद्धं भवति । तथा च ब्राह्मणत्वादेः कर्मकल्पितत्वादात्मनश्च तद्राहित्यं सिद्धम् । ब्राह्मणोऽहमित्यादिप्रत्ययस्तु भ्रमः । तदुक्तं विष्णुपुराणे—

सितनीलादिभेदेन यथैकं दृश्यते नभः ।
भ्रान्तिदृष्टिभिरात्माऽपि तथैकः सन्पृथक्पृथक् ॥ इति ।

अतो जीवब्रह्मणोरैक्ये न किंचिद्बाधकमिति भावः ॥ १ ॥

ननु ब्रह्मणो जगज्जन्मादिकारणत्वात् जीवस्य तदभावात् कथमुभयोरैक्यमिति चेत्, नैष दोषः; सोऽयं देवदत्त इतिवत् विरुद्धांशत्यागेन तयोरैक्यसंभवादित्यभिप्रेत्याह—

ब्रह्मैवाहमिदं जगच्च सकलं चिन्मात्रविस्तारितं
सर्वं चैतदविद्यया त्रिगुणयाऽशेषं मया कल्पितम् ।
इत्थं यस्य दृढा मतिः सुखतरे नित्ये परे निर्मले
चाण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम ॥

चिन्मात्रविस्तारितमिति । चिन्मात्रे ब्रह्मणि शुक्तिरूप्यन्यायेनाध्यस्तमित्यर्थः । अध्यस्तस्य चाधिष्ठानसत्तातिरेकेण सत्ताशून्यत्वात्,

सदंशमादाय सर्वं जगच्चिन्मात्रं ब्रह्मैवेत्यर्थः । त्रिगुणया अविद्यया साधनेन मया प्रत्यगात्मना द्रष्ट्रा । एतत्सर्वं दृश्यजातं जगत् कल्पितं यस्मात्, अतो जगदधिष्ठानभूतं चिन्मात्रं ब्रह्मैवाहमस्मि । इत्थं अनेन प्रकारेण सुखतरे निरतिशयानन्दैकरसे नित्ये ध्रुवे अत एव परे सर्वोत्कृष्टे अत एव निर्मले मोहतत्कार्यमलरहिते स्वप्रकाशचिदेकरसे ब्रह्मणि यस्य मुमुक्षोर्मतिर्दृढा भवति, चिदेकरसब्रह्मसाक्षात्कारो दृढो भवति, स तु नित्यशुद्धब्रह्मैवेति कृत्वा, चाण्डालो वा भवतु द्विजो वा भवतु गुरुरिति मम मनीषेत्यन्वयो बोध्यः ॥ २ ॥

पूर्वं जगतो मिथ्यात्वमुक्तम्, अधुना अनित्यत्वमप्यस्तीत्याह—

शश्वन्नश्वरमेव विश्वमखिलं निश्चित्य वाचा गुरो-
र्नित्यं ब्रह्म निरन्तरं विमृशतां निर्व्याजशान्तात्मनाम्
भूतं भावि च दुष्कृतं प्रदहतां संविन्मये पावके
प्रारब्धाय समर्पितं स्ववपुरित्येषा मनीषा मम ॥

गुरोर्वाचा इदं विश्वं नश्वरमेव निश्चित्य, नित्यं कालतः परिच्छेदरहितं सच्चिदानन्दघनमद्वितीयं ब्रह्म यत् तदेवाहमस्मीति निरन्तरं विमृशतां भावयतां स्वरूपध्यानासक्तानाम् । ब्रह्मभावनायाम् उपायं दर्शयन्नाह—निर्व्याजशान्तात्मनामिति । निर्गतो व्याजो दम्भो यस्मात् स तथाभूतः शान्तः स्वरूपनिष्ठः आत्मा मनो येषाम् । तथा च दम्भदर्पाद्यासुरवासनाक्षयो मनोनाशश्च येषां विदुषां ते तथोक्ताः ॥

ननु के ते वासनामनसी; कथं वा तयोर्नाश इति चेत्, शृणु—पूर्वापरपरामर्शमन्तरेण सहसोत्पद्यमानस्य दम्भदर्पादिवृत्तिविशेषस्य हेतुश्चित्तगतः संस्कारो वासना। पूर्वाभ्यासेन चित्ते वासितत्वात् वासना नाम कीर्तिता। तस्याः वासनायाः क्षयो नाम विवेकजन्यायाममानित्वादिदैववासनायां दृढायां सत्यां बाह्यनिमित्ताभावेन दम्भाद्यनुत्पत्तिः। प्रदीपज्वालासंतानवत् ज्ञानसंतानरूपेण परिणम्यमानमन्तःकरणद्रव्यं मननात्मकत्वान्मन इत्युच्यते। तस्य मनसो नाशो नाम वृत्तिरूपपरिणामं परित्यज्य वृत्तिनिरोधाकारेण परिणामः। सोऽयं मनोनाश इत्यवधेयम्। तथा चोक्तम्—

यावद्विलीनं न मनो न तावद्वासनाक्षयः।
न क्षीणा वासना यावत्तावच्चित्तं न शाम्यति॥

तथा च मनसि नष्टे सति संस्कारोद्बोधकस्य बाह्यनिमित्तस्याप्रतीतौ वासना क्षीयते। क्षीणायां च वासनायां हेत्वभावेन दम्भादिवृत्त्यनुदयात् मनो नश्यति; विषयचिन्तनाख्यावृत्तं भवति॥

एवं तत्त्वज्ञानस्य साधनमुक्त्वा, तत्फलं दर्शयन्नाह—भूतं भावि च दुष्कृतं प्रदहतां संविन्मये पावके इति।

भूतं अजनितफलं जन्मान्तरसंचितम्, इहजन्मन्यपि प्राक् ज्ञानोत्पत्तेः संचितम्; भावि च ब्रह्मसाक्षात्काराद्रूर्ध्वं देहेन्द्रियव्यापारवशात्संभावितम्, दुष्कृतं सुकृतं च संविन्मये स्वप्रकाशचिदेकरसे

सर्वाधिष्ठानभूते पावके ब्रह्माग्नौ प्रदहताम् ; स्वव्यतिरेकेणाभावादिति निश्चयवतामित्यर्थः। ननु अभुक्तस्य कर्मणो नाशासंभवात् ब्रह्मज्ञानिनोऽप्यस्ति कर्मलेप इति चेत्, न। ब्रह्मतत्त्वविदोऽत्र कर्मलेपशङ्काऽपि नोदेति। तत्कस्मात्? नाकार्षं न करोमि न करिष्यामीति कालत्रयेऽपि अकर्तृब्रह्मस्वरूपेण स्थितत्वात्। न ह्यकर्तुः पापलेशसंभावनाऽप्यस्ति। कुतः? अश्लेषविनाशयोः श्रुतत्वात्। ब्रह्मसाक्षात्कारादनन्तरं देहेन्द्रियव्यापारवशात् संभावितयोः पुण्यपापयोरश्लेषः। तदुक्तम्—

'लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' इति।

इह जन्मनि भवान्तरे वा संचितस्य दुरितसङ्घस्य विनाशः श्रूयते। तथा हि—

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा॥ इति

ननु संचितवत् प्रारब्धकर्मणोऽपि ज्ञानोदयसमय एव विनाशः किं न स्यादित्याशङ्क्याह—प्रारब्धाय समर्पितं स्ववपुरिति। प्रारब्धाय प्रारब्धफलाय सुकृताय दुष्कृताय च स्ववपुः समर्पितम्। तत्त्वविदोऽप्यादेहपातं भासमात्रेण संसारोऽस्तीति भावः। देहावसाने प्रतिभासनाशो भवति, नान्यथा। ननु नष्टायामविद्यायां कथं तत्कार्यस्य प्रारब्धस्यानुवृत्तिरिति चेत्। निष्कासितेऽपि दण्डे कुलालचक्रभ्रमणवदित्यवेहि। यथा वा तूणनिष्ठेषु बाणेषु स्वीकारपरित्यागयोः स्वातन्त्र्ये-

ऽपि मुक्ते बाणे स्वातन्त्र्यं न दृश्यते। न च बाणो वेगे अक्षीणे स्वयं पतति; क्षीणे च वेगे स्वयमेव पतति। तथा प्रारब्धं कर्मापि। ननु केन तर्ह्यारब्धकर्मनाशः? भोगादेवेति ब्रूमः। तथा च विद्वान् भोगेन पुण्यपापे क्षपयित्वा अखण्डसच्चिदानन्दैकरसं ब्रह्म प्राप्नोति ॥ ३ ॥

नन्वस्तु विदुषो ब्रह्मप्राप्तिः, तदेव च परं न संभवति। स्थूलोऽहं कृशोऽहं बधिरोऽहं बुभुक्षितोऽहमिति देहाद्यात्मकत्वेनानुभूयमानस्य जीवस्य स्वप्रकाशचिदेकरसेन ब्रह्मणा स्वरूपैक्यस्य कथमप्ययोगादिति चेत्, न; ममेदं चक्षुर्ममेदं शरीरं ममायं प्राणो ममेदं मन इति देहेन्द्रियादयः इदंकारास्पदत्वेनानुभूयन्ते; आत्मा तु देहेन्द्रियादिभ्यो विलक्षणतया देवतिर्यङ्मनुष्यादिभिः सर्वैर्जन्तुभिरहमहमित्यन्तःस्फुटतरमहंप्रत्ययालम्बनत्वेनानुभूयते। अत इदंकारास्पददेहेन्द्रियादीनां घटादिवदात्मत्वाभावेन सिद्धमहमर्थस्यैव प्रत्यगात्मतया स्वप्रकाशचिदेकरसब्रह्मत्वमित्याह—

या तिर्यङ्नरदेवताभिरहमित्यन्तः स्फुटा गृह्यते
यद्भासा हृदयाक्षदेहविषया भान्ति स्वतोऽचेतनाः।
तां भास्यैः पिहितार्कमण्डलनिभां स्फूर्तिं सदा भावय-
न्योगी निर्वृतमानसः स गुरुरित्येषा मनीषा मम ॥ ४ ॥

या तिर्यगिति। तिर्यञ्चः कीटपतङ्गादयः तैः तिर्यगादिसर्वजन्तुभिः अहमहमित्यहंप्रत्ययालम्बनत्वेनान्तः स्फुटा प्रकाशान्तरनिरपेक्ष-

तया स्वयंप्रकाशमाना स्फूर्तिः चिदेकरसः परमात्मा गृह्यते अनुभूयते न देहेन्द्रियादयः। कुतः? तेषां स्वतो जडत्वेन चिद्भास्यत्वादित्याह—यदिति। स्वतोऽचेतनाः हृदयाक्षदेहविषयाः हृदयेन्द्रियशरीरशब्दादयः यद्भासा यस्य स्वप्रकाशचिदेकरसस्यात्मनो भासा प्रकाशेन भान्ति। तदुक्तम्—

अजडात्मवदाभान्ति यस्मान्मिथ्याजडा अपि।
देहेन्द्रियमनःप्राणाः सोऽहमित्यवधारय॥ इति।

न च यद्यात्मा स्फुटतरमहंप्रत्ययगम्यः स्यात्, तर्हि विनैव यत्नं सर्वे जन्तवः किमिति मुक्ता न स्युः? अज्ञानबन्धनिवर्तकस्यात्मसाक्षात्कारस्य वृत्तत्वादिति वाच्यम्। अहंप्रत्ययालम्बनत्वेनात्मानं जानन्तोऽप्यसंगचिदानन्दस्वरूपत्वेन चिद्भास्याज्ञानपटलावृताक्षाः विविच्य न जानन्ति। यथा आदित्यावभास्याभ्रावृताक्षो जन्तुरर्कं विघनं सप्रभं विविच्य न जानाति; किं तु घनच्छन्नं निष्प्रभमेव जानाति। तद्वदहंप्रत्ययास्पदत्वेन जानन्तो निःसङ्गचिद्रूपत्वेनात्मानं न जानन्ति। तथा चोक्तम्—

तमहंप्रत्ययव्याजात्सर्वे जानन्ति जन्तवः।
तथाऽपि शिवरूपेण नैव जानन्ति मोहिताः॥

इत्यभिप्रायेणाह—तां भास्यैः पिहितार्कमण्डलनिभामिति। भास्यैर्मेघैः पिहितं छन्नं यदर्कमण्डलं तत्सदृशामित्यर्थः। तस्माद्देहे-

न्द्रियादिविलक्षणतया स्फुटतरस्वानुभूतिगम्या या स्फूर्तिश्चिदेकरसः परमात्मा, तमात्मानं सदा अनन्यव्यापारतया भावयन् स एवाहमिति तदाकारवृत्तिसंतानं कुर्वन्नित्यर्थः। तदुक्तम्—

सावधानतया नित्यं स्वात्मानं चैव भावयेत्।
दृश्यं ह्यदृश्यतां नीत्वा ब्रह्माकारेण चिन्तयेत्॥ इति।

अयमेव संप्रज्ञातसमाधिरित्युच्यते। तदुक्तम्—

ब्रह्माकारमनोवृत्तिप्रवाहोऽहंकृतिं विना।
संप्रज्ञातसमाधिः स्यात् ध्यानाभ्यासप्रकर्षतः॥ इति।

स्थूलोऽहं कृशोऽहमित्येवंरूपदेहाद्यहंकृतिं विना। तत्साधनं योगाख्यमुपदर्शयन्नाह—योगीति। योगश्चित्तनिरोधः; तद्वान् योगी। अथवा, योगः अहं ब्रह्मेति ज्ञानम्; तद्वान् योगी। तथा च स्मर्यते—

वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि।
एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यते॥ इति।

ततः किमित्यत आह—निर्वृतमानस इति। निर्वृतिः स्वरूपसुखं तद्वत् मानसं यस्य स तथोक्तः। तथा च आत्मतत्त्वविदुषो निरुद्धाशेषव्यापारमनस्कतया विदिततत्त्वतया निरन्तरं निर्विघ्नेन भावनानुष्ठानानुवृत्तौ परिपूर्णस्वप्रकाशचिदेकरसब्रह्मानन्द आविर्भवतीति भावः। यस्मात्कारणाद्योगी निरुद्धमनाः स्वप्रकाशं परमात्मानं भावयन्नास्ते, स तस्मात्सुखितमानसो यः कश्चिद्वा भवतु; परं तु गुरुरिति मम मनीषेत्यन्वयः॥

प्रत्यगात्मनः परमप्रेमास्पदत्वेन परमानन्दब्रह्मता सुघटत इत्याह—

यत्सौख्यांबुधिलेशलेशत इमे शक्रादयो निर्वृता
यच्चित्ते नितरां प्रशान्तकलने लब्ध्वा मुनिर्निर्वृतः ।
यस्मिन्नित्यसुखाम्बुधौ गलितधीर्ब्रह्मैव न ब्रह्मवि-
द्यः कश्चित्स सुरेन्द्रवन्दितपदो नूनं मनीषा मम ॥ ५ ॥

यस्य स्वप्रकाशस्यात्मनः सुखमेव सौख्यम्; स्वार्थे ष्यञ्प्रत्ययः । तदेवाम्बुधिरिवाम्बुधिः सर्वसैकरसत्वात् । तस्य लेशलेशत इमे शक्रादयो निर्वृताः सुखिनो भवन्ति । प्रशान्तकलने प्रशान्ताः कलनाः संकल्पादयो यस्य तत्तथोक्तम् । तस्मिन् चित्ते यत्स्वरूपसुखं नितरां लब्ध्वा मुनिः सनकादिब्रह्मविद्वर्गः निर्वृतः सुखी भवति । यस्मिन्नित्यसुखाम्बुधौ नित्यनिरतिशयानन्दैकरसे ब्रह्मणि गलितधीः गलिता निमग्ना तद्भावमापन्ना धीश्चेतो यस्य स तथोक्तः । स्वप्रकाशचिद्घनसदानन्दैकरसे तन्मात्रत्वेनावस्थितस्वान्त इत्यर्थः । तथा च स्मर्यते—

मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः ।
याऽसंप्रज्ञातनामाऽसौ समाधिरभिधीयते ॥ इति ।

इत्थं यः कश्चित् परिपूर्णपरमानन्दपारावारे प्रलीनमनस्कः स तु परिपूर्णपरमानन्दस्वरूपत्वात्तत्स्वरूपम्; न ब्रह्मवित्, ज्ञातृज्ञेयभावस्य भेदगर्भितत्वेनाद्वैतहानात्; किं तु ब्रह्मैव ।

१७· अंशाधिकरणम् ॥

## अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४३ ॥

जीवब्रह्मभिदां निषेधतां
प्रेर्यप्रेरकता कथं तयोः ।
अंशोऽशीति विभागकल्पना-
ऽप्येकान्ताभिदया विरुध्यते ॥ ३३ ॥

या ब्रह्मप्रतिबिम्बताऽस्ति सा
जीवानामुदिता तदंशता ।
तद्भेदाध्यसनेन चोच्यते
सर्वाऽपि प्रथिता व्यवस्थितिः ॥३४॥

(शुद्धविराट्)

इति श्रीमदप्पय्यदीक्षितेन्द्रविरचिते चतुर्मतसारे नयमञ्जर्याख्ये
चतुर्थपरिच्छेदे द्वितीयाध्यायस्य
तृतीयः पादः



## द्वितीयाध्यायस्य चतुर्थः पादः ॥

### १. प्राणोत्पत्त्यधिकरणम् ॥

## तथा प्राणाः ॥ १ ॥

सर्वकार्यपूर्वभाविभाव
  कीर्तयत्त्यपास्यतीन्द्रियाणाम् ।
कर्म वैदिकी श्रुतिस्तदेषां
  जन्मवर्णनौपचारिकी स्यात् ॥ १ ॥

जन्यभावभङ्गतो न युक्तं
  साधनं जनिश्रुतेस्तदेषाम् ।
अस्तितोक्ति शर्करादिसृष्टेः
  प्रागवान्तरे लये तदर्थम् ॥ २ ॥

(मयूरसारिणी)

### २. सप्तगत्यधिकरणम् ॥

## सप्त गतेर्विशेषितत्वाच्च ॥ ५ ॥

तेषां संख्या नानारूपाः सन्त्याम्नाताः सप्ताष्टाद्या-
  स्तत्र ह्यल्पीयस्तापक्षः श्रेयानातः सप्तैव स्युः ।
सप्तानामेवात्रोत्क्रान्तिः संख्याल्पत्वादादर्तव्या
  तत्राम्नातास्त्वष्टाद्याः स्युः संख्याभेदास्तद्वृत्तीनाम् ॥

नानासंख्याम्नाने येषां कार्यं दृष्टं यावन्त्यातः
सप्तैतानि स्युश्चरवार्थयूना संख्योपास्त्याद्यर्था ।
तेषामुत्क्रान्तिश्च श्रुत्याः प्रस्तावेनासंकोच्यत्वा-
दुन्क्रत्वस्याम्नाने तेषां सप्ताधिक्यस्यालोकाच्च ॥ ४ ॥

(अनङ्गक्रीडा)

३. प्राणाणुत्वाधिकरणम् ॥

## अणवश्च ॥ ७ ॥

व्यापकानि तानि खानि सर्वतो
विप्रकृष्टगोचरोपलम्भनात् ।
तावतामनन्तताश्रुतेरपि
व्यापिनां च नोत्क्रमस्त्वतो भवेत् ॥ ५ ॥

उत्क्रमश्रुतेरणूनि नो यदि
स्वर्गतोऽपि दृश्यतामिह व्रजेत् ।
संनिकर्षतो दृशिर्दवीयसां
ख्यातुमेव कीर्तिता त्वनन्तता ॥ ६ ॥

(श्येनिका)

४. प्राणश्रैष्ठ्याधिकरणम् ॥

## श्रेष्ठश्च ॥ ८ ॥

अस्ति महाप्रलयेऽपि हि
प्राणनमित्युपदिश्यते ।

तेन वयं प्रमिमीमहे
प्राणमरुन्न विजायते ॥ ७ ॥

तस्य जनिर्बहुधा श्रुता
लिङ्गमवातगिरा हतम् ।
तत्परमेश्वरसत्तया
सार्थकता त्वननश्रुतेः ॥ ८ ॥

(उत्सुकम्)

५. वायुक्रियाधिकरणम् ॥

## न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥

प्राणोऽयं वायुमात्रं
तस्य श्रुतौ वायुनोक्तेः ।
सर्वेषामिन्द्रियाणां
संघातजन्मा क्रिया वा ॥ ९ ॥

अस्ति ह्येषां शरीर-
व्यापारहेतुः क्रियैका ।
कीरादीनां खगानां
तत्पञ्जराकम्पनी वा ॥ १० ॥

तत्स्थापितः प्राणस्त्वेष्टः
पार्थक्यतो नैव तदैक्यम् ।

भिन्नः शरीरव्यापारः
साजात्यतो वक्ति वाक्यम् ॥ ११ ॥

नाप्यक्षाणां क्रियैव
द्रव्यान्तरत्वावसाया ।
तस्मादाध्यात्मिकोऽयं
पञ्चात्मको वायुभेदः ॥ १२ ॥

(चन्द्रलेखा)

६. श्रेष्ठाणुत्वाधिकरणम् ॥

अणुश्च ॥ १३ ॥

समतया मीयते ह्येष लोकैस्त्रिभिः
समतया मीयते ह्येष सर्वेण च ।
विभुरतस्तावदुत्क्रान्तिरस्य श्रुता
कलयतां भूतसूक्ष्मोपाधिकां तां तु ॥ १३ ॥

भवति हैरण्यगर्भो विभुर्नेयता
प्लुषिसमत्वाधिकस्यापि चात्र श्रुतेः ।
स्वत इहोत्क्रान्तिगत्यागते संभव-
त्यनुचितत्वात्परोपाधितायाः अपि ॥ १४ ॥

(चर्वरी)

७. ज्योतिराद्यधिकरणम् ॥

## ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥

तपनवह्निमुखाः सुराः किल चक्षुराद्यभिमानिनः
श्रुतिमिता इति तत्प्रवर्तनकारिणो यदि जीववत् ।
विषयदर्शनकर्मसंभवपुण्यतत्फलभागिनः
कथमिव स्युरिमेऽपि जीववदेव नेन्द्रियतामिताः ॥

न खलु वैषयिकोपलब्धिमुपाश्रयन्ति दिवौकसो
न च तदीयकलेबरेषु भवन्ति पुण्यफलाः क्रियाः ।
तपनभास इवेन्द्रियेषु भजन्त्यनुग्रहकारितां
श्रुतिबलादिति कल्पने किमिहास्ति किंचन दूषणम् ॥

८. इन्द्रियाधिकरणम् ॥

## त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥

वाक्चक्षुःप्रभृतीदं प्राणस्यैव तु वृत्ति-
र्नाभिप्रभृतिस्थानान्नानात्वं प्रतिपन्ना ।
तद्रूपं तदधीनं प्राणश्रुत्यभिधेयं
यद्गीतं श्रुतिवाक्यैर्न द्रव्यान्तरताऽर्हम् ॥ १७ ॥

तत्सृष्टेः पृथगस्य श्रुत्योक्ता ननु सृष्टि-
स्तल्लिङ्गं बलि वाक्यात्तद्भेदं गमयेन्नः ।

कोऽन्तस्थस्तदधीने न द्रव्यान्तरतेति
प्राणोक्तिः परिकल्प्या नानार्था श्रुतिदृष्टेः ॥ १८ ॥
(अलोला)

९. संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥

व्यवधिसहिता जगद्व्याकृतिः
सरसिजभुवा परब्रह्मणः ।
प्रणिधिपुरुषेण राज्ञो यथा
परबलदृशस्तथैव श्रुतेः ॥ १९ ॥

सरसिजदृशः प्रवेशोऽन्यथा
न तु परकृतौ जगद्व्याकृतौ ।
गुणगतिरपि प्रधानान्वये
समुचिततरा ह्ययोग्ये सति ॥ २० ॥
(प्रमुदितवदना)

इति श्रीमदप्पय्यदीक्षितेन्द्रविरचिते चतुर्मतसारे नयमञ्जर्यां
चतुर्थपरिच्छेदे द्वितीयाध्यायस्य
चतुर्थः पादः ॥

## अथ तृतीयोऽध्यायः ॥

१. तदन्तरप्रतिपत्त्यधिकरणम् ॥

### तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥

भोग्यवदन्यदेहमपि जीव इतः गमने समश्नुते
देहगभूतसूक्ष्मसहितस्य गतिः किमिह प्रकल्प्यते ।
श्रुत्युदितं त्वपां पुरुषशब्दनमात्रमतो न सिध्यति
द्युप्रभृतिष्वपामपि गतिः कथमप्युदिता न दृश्यते ॥

नैव भवत्यपां पुरुषशब्दनमत्र त्रिवृत्कृतिं विना
केवलमाप एव न च सन्ति परेण हि तास्त्रिवृत्कृताः ।
श्राद्धकृताहुतिस्वभवयाऽम्बुदलक्षणयोपलक्षिता-
स्ता दिवि सोमराजतनुसंभवकारणमित्यधीमहे ॥२॥

(उत्पलमालिका)

कृतात्ययाधिकरणम् ॥

### कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥

इह स्म यत्किंचन करोति मानवः
स तस्य भुक्त्वा फलमशेषकर्मणः ।

दिवोऽवरोहेद्वसुमतीं तथा श्रुते-
रकर्मलेशश्चर…तन्तुसंनिभात् ॥ ३ ॥

विशिष्टविप्रादिषु न जन्म कर्मणा
विना तदङ्गेन चरणेन संभवेत् ।
अतः सकर्मा गतिविशेषलिङ्गत-
स्तदेतु सङ्के…शेषलिङ्गकम् ॥ ४ ॥

(मञ्जुवादिनी)

३. अनिष्टादिकार्यधिकरणम् ॥

## अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥

विधुमखादिकृतोऽप्यधिरूढा-
स्तदनु भजन्ति फलाय तृतीयम् ।
विधुगमनश्रवणादखिलानां
तदुपगमे च पथोऽनुपदेशात् ॥ ५ ॥

हिमकिरणाप्तिवदेव जनानां
यमसदनाप्तिरपि श्रुतिसिद्धा ।
तदुचितमत्र विशेषवचोभ्यां
द्विविधजनेषु तयोः प्रविभागः ॥ ६ ॥

(तामरसम्)

४. स्वाभाव्यापत्त्यधिकरणम् ॥

## तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

भवतु शिलादात्मजासुमनस्ता-
परिणतिरीत्या श्रुतिपठितेभ्यः ।
अनुशयिनां स्वश्वसनमुखात्मा
परिणतिरग्रेतनभवितेभ्यः ॥ ७ ॥

कथमपि पूर्वास्थितगगनात्मा
परिणतिरेषा कथमधुना स्यात् ।
तदिह पृथक्त्वानुभवयोग्या
गगनमुखाप्तिर्भवतिभिरुक्ता ॥ ८ ॥

(कुसुमविचित्रा)

५. नातिचिराधिकरणम् ॥

## नातिचिरेण विशेषात् ॥ २३ ॥

आकाशादिष्वमीषां वसतिरतिचिरं व्रीहिप्रमुखव-
स्त्वस्सर्वेभ्योऽपि दुर्निष्प्रपततरमिति श्रुत्यैव भणितम् ।
नास्यां व्रीह्यादिमात्रे श्रुतिरत इति संकोचं कलयते
न श्रुत्याः सन्निधानं खलु बलरहितं बाधे प्रभवति ॥

आकाशाद्या विलम्बातिशयविषयकश्रुत्या हि तत्पा-
ऽऽकाङ्क्ष्यन्ते स्वाभिधेयावधिविषयतयाऽऽकाङ्क्षाबलक्कृप्ताः ।

तेषां तत्रान्वयश्चेद्गत इति भवति व्रीह्यादिविषय-
स्तस्मादाकाशमुखगस्थितिरनतिचिरात्तेभ्योऽनुशयिनाम् ॥

(सुवदना)

६. अन्याधिष्ठिताधिकरणम् ॥

## अन्याधिष्ठिते पूर्ववदभिलापात ॥ २४ ॥

व्रीहियवादिरूपजनिमनुशयिनिकरः
श्रुत्युदितां न विप्रजनिमिव कथमयताम् ।
इष्टकृतोऽपि दुःखबहुलजननमुचितं
हिंसनयोगतस्तदशुचि भवति हि यतः ॥ ११ ॥

श्लेषणमात्रमत्र गगनपवनघनव-
त्कर्म हि विप्रजन्मवदिह न विनिगदितम् ।
आवृणुते निषेधवचनमविधिविषयं
रागजहिंसनं न विहितमधिमखगतम् ॥ १२ ॥

(ऋषभगजविलसितम )

इति श्रीमदप्पय्यदीक्षितेन्द्रविरचिते चतुर्मतसारे नयमञ्जर्यां
चतुर्थपरिच्छेदे तृतीयाध्यायस्य
प्रथमः पादः ॥



## अथ तृतीयाध्यायस्य द्वितीयः पादः ॥

### १. संध्याधिकरणम् ॥

## संध्ये सृष्टिराह हि ॥ १ ॥

स्वप्नपदार्थाः खलु परसृज्या

व्योमसमीरादिकवदधीताः ।

तद्वदमीषां न भवति बाधो

जागरबोधैरिति कलयामः ॥ १ ॥

जागरणादावनुभवसिद्धो

बाध इहैषां कथमपलप्यः ।

प्रस्तुतजीवान्वयि स हि कर्ते-

त्येतदतोऽमी न हि परसृज्याः ॥ २ ॥

(श्रीवृत्तम्)

### २. तदभावाधिकरणम् ॥

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

नाड्यां पुरितति परमेशे वा

जीवः स्वपिति न युगपत्तेषाम् ।

सुप्तावधिकरणतयाऽपेक्षा

तस्मादुचित इह विकल्पः स्यात् ॥ ३ ॥

सौधोपरिगृहकशिपुन्यायाग-
युक्ता वरमिह निखिलापेक्षा ।
दोषोऽत्र क इति कलुषा नेषां
वैकल्पिकगतिरुचिता वक्तुम् ॥ ४ ॥
(महाचित्रा)

३. कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥

स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

लयजननवतोः सत्युपाध्योर्भिदा
पिशुनयति भिदामुत्थिते सुप्ततः ।
न हि भवति भिदोपाधिभेदे हते
क्वचिदपि च मते तावके जीवयोः ॥ ५ ॥

स्वपनमधिगतो यः स एवोत्थितः
स्वपरविषयकप्रत्यभिज्ञादिभिः ।
तदनुसरणतः कल्प्यते सुप्तिषु
स्थितिरपि मनसां सूक्ष्मरूपैरिति ॥ ६ ॥
(क्षमा)

४. मुग्धाधिकरणम् ॥

मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ १० ॥

जगति हि विदिताश्चतस्रो दशा
न तु तत इतरा प्रथामश्नुते ।

तदनुभवमितोऽस्ति मूर्छित या
स्वपनमरणतो न सा भिद्यते ॥ ७ ॥

अभिमुखावेक्षणैः पुनश्चोत्थितैः
प्रकटमुभयतो भिदा विश्रुता ।
सकलजनमितास्तु साधारणाः
प्रथितिमुपगताश्चतस्रो दशाः ॥ ८ ॥

(प्रभा)

५. उभयलिङ्गाधिकरणम् ॥

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥११॥

निर्गुणं निगदितं श्रुतिषु परं
ब्रह्म तत्सगुणमप्यधिगमितम् ।
तत्त्वतः परत इत्युभयविधं
तत्प्रमाभ्रमकरत्वमिव दृशोः ॥ ९ ॥

निर्गुणं न परसंगतिमयते
तत्कृता परिणतिरपि न तराम् ।
तद्विवर्तविषयाः सगुणागिर-
स्तत्परश्रुतिशतप्रतिनिहताः ॥ १० ॥

(चन्द्रवर्त्म)

६. प्रकृतैतावत्त्वाधिकरणम् ॥

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥

नेति नेति पदयुगे प्रतिषेधो यन्न निराश्रयो
रूपि केवलमुदितं प्रतिषेधार्हं निजरूपयोः ।
ते तु नार्हत इह हि प्रमिते लोकैः प्रतिषेध्यतां
स्यान्निषेधपदयुगास्थितवीप्सा त्वादरगोचरा ॥

स्वप्रधानमिह खलु प्रकृतं लोकावगतं जग-
द्ब्रह्मरूपयुगतयोदितमन्वेति प्रतिषेधनैः ।
ब्रह्म तु श्रुतिशिखरैः प्रमितमपूर्वं विशेषणं
तत्र नान्वयमयते विफला वीप्सा च तदन्वये ॥

(हरनर्तकम्)

७. पराधिकरणम् ॥

## परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥

सेत्वादिव्यवहरणाद्ब्रह्म
द्वैतीयीकयुगिति निश्चेयम् ।
प्राप्त्यर्थो विधिरभिको यस्मा-
दद्वैतश्रुतिरुपचारात्स्यात् ॥ ९३ ॥

अभ्यासादपि भवति प्रतीति-
नीचैस्तत्स्तुतिविहतिरिष्टा ।
सामान्यादिभिरुपपत्तिः स्या-
त्सेतुत्वव्यवहरणादीनाम् ॥ १४ ॥

८. फलाधिकरणम् ॥ २८ ॥

फलमत उपपत्तेः ॥ ३८ ॥

कर्मण एव फलाप्तिः
संघटते कृषिरीत्या ।
ब्रह्मणि तत्स्तुतिमात्रं
मा फलदायि सकृद्भूत् ॥ १५ ॥

स्तुत्यवधारणपक्षे
कल्प्यमपूर्वमवश्यम् ॥
तद्वरमीशितुरेव
श्रुत्युदितं फलदत्वम् ॥ १६ ॥

(चित्रपदा)

इति श्रीमदप्पय्यदीक्षितेन्द्रविरचिते चतुर्मतसारे नयमञ्जर्याख्ये
चतुर्थपरिच्छेदे तृतीयस्याध्यायस्य
द्वितीयः पादः



वेदस्याप्रामाण्यं, तेन वेदप्रामाण्यसिद्ध्यर्थमेव स्मृतिप्रामाण्यमिति संगतिरिति। नैतदेवम्। यदा हि स्मृतेरप्रामाण्यं तदा मन्त्रस्य स्मार्तकर्माङ्गत्वे किं प्रमाणम्? न तावल्लिङ्गम्, तस्य सामान्यसंबन्धप्रमाणापेक्षत्वात्। न स्मृतिवाक्यम्, तस्याप्रामाण्यात्। यद्यपि च लिङ्गमात्रं

---

विनियोजकाभावात्। कुतस्तत्सापेक्षत्वेन वेदाप्रामाण्यमिति परिहरति— नैतदेवमिति। ननु मन्त्रस्य रात्रिप्रकाशनसामर्थ्यरूपं स्वाहाकाररूपं च लिङ्गं रात्रिदेवत्यस्याष्टकाहोमविनियोजकमस्तीत्याशङ्क्य दूषयति— न तावल्लिङ्गमिति। मन्त्रविनियोगात्प्रागेवाष्टकाहोमस्य रात्रिदेवत्यत्वं[1] सिद्धवत्कृत्येयं[2] शङ्का। तच्चेन्मन्त्रविनियोगाधीनमेव स्यात् तदा नैषं शङ्कावकाश इति द्रष्टव्यम्। तस्येति। लिङ्गं क्रत्वपूर्वसंबन्धे सामान्यतः सिद्धे तदपूर्वसंबन्धिपदार्थविशेषे स्वयं विनियोजकम्। 'लिङ्गक्रमसमाख्यानात्काम्ययुक्तं समाम्नानम्' इति तृतीयाध्यायाधिकरणे 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः' इत्यारभ्य समाम्नातेष्वैन्द्राग्नादिष्विष्टि[3]विशेषेष्वेव इन्द्राग्न्यादिलिङ्गक्रमेण काम्ययाज्यानुवाक्याकाण्डसमाख्याने प्रदेशान्तरे समाम्नातानाम् 'इन्द्राग्नी रोचना दिवः' इत्यादिमन्त्राणां विनियोगः, न तु क्रमसमाख्ये बाधित्वा इन्द्राग्न्यादिलिङ्गककर्ममात्रे लिङ्गेन विनियोगः। लिङ्गस्य क्रत्वपूर्वसामान्यसंबन्धप्रमाणसापेक्षत्वात्; काम्येष्टिषु क्रमसमाख्यावत्कर्मान्तरेषु तथाभूतप्रमाणाभावादिति व्युत्पादितत्वादिति भावः। ननु अष्टम्यां कर्तव्यस्याष्टकाश्राद्धस्याङ्गतया सप्तम्यां रात्रौ कर्तव्येऽष्टकाहोमे 'यां जनाः' इति मन्त्रस्य विनियोजकं स्मृतिवाक्यमस्ति— 'अञ्जलिनोत्तरयाऽपूपान् जुहोति' इति। अष्टम्यां कर्तव्येऽपि होमे विनियोजकमस्ति— 'मांसौदनमुत्तराभिः' इति, इत्याशङ्क्य दूषयति— न स्मृतिवाक्यमिति। स्मृत्यप्रामाण्यपूर्वपक्षवादिना स्मृतिवाक्यं प्रमाणतयोदाहर्तुमयुक्तमित्यर्थः॥

ननु तर्हि सामान्यसंबन्ध[4]प्रमाणान्तराभावेऽपि अगत्याऽत्र लिङ्गमेव सामान्यसंबन्धापादनपूर्वकं विशेषविनियोजकं स्यात्; न हि वैदिको रात्रिदेवत्यो होमः कश्चिदेतन्मन्त्रान्वयार्होऽस्ति। 'यमासाद्यायं निर्वृणुयात्पुरुषमेधे रात्र्यै कृष्णं पिङ्गाक्षम्' इति विहितस्य पशुयागस्य पर्यग्निकरणान्तोत्सर्गविधानेन होमपर्यन्तत्वाभावात्। नक्षत्रेष्ट्यादिषु 'अहोरात्रेभ्यः स्वाहा' 'अर्धमासेभ्यः स्वाहा' इत्यादिमन्त्रकहोमसद्भावेऽपि तेषां रात्रिमात्रदेवत्यत्वाभावात्, उत्पत्तिशिष्टमन्त्रान्तरावरोधाच्च। गत्यन्तराभावे च मन्त्रलिङ्गादेव सामान्यसंबन्धस्यापि सिद्धिः 'अभ्यासेन तु संख्यापूरणं सामिधेनीष्वभ्यासप्रकृतत्वात्' इति दशमाध्यायाधिकरणे ग्रन्थकृतैवाङ्गीकृता। तत्र हि— 'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य' इत्यादिसामिधेनीवृद्धिश्रवणे दर्शपूर्णमासप्रकरणाम्नाताभ्यः 'प्र वो वाजा' इत्यादिभ्यः प्रवोवाजीयादिभ्य एकादशभ्योऽधिकानामाग्नेयीनामृचां 'दाशतयीभ्य आगमः कार्यः' इत्यधिकरणार्थं समाप्य, किं पुनरागम्यमानानामृचां कर्मसंबन्धे प्रमाणम्? लिङ्गं हि सामान्यतः क्रतुसंबन्धप्रमाणमपेक्ष्य द्वारविशेषमात्रे प्रमाणमित्याशङ्कामुद्भाव्य, एकविंश-

---

1. म. ०दैवत्यत्वं 2. म.०त्यैवं 3. विशेषेषु 4. म. बाधक

**विनियोजकं स्यात्तथाऽपि फलवदङ्गत्वेनाफलस्य विनियोगात्स्मृतिप्रामाण्ये च स्मार्तस्य कर्मणः**

---

त्वादिसंख्याविधानसामर्थ्येनागत्या याः काश्चिदग्निलिङ्गा ऋचो दाशतयीभ्य आदातव्या इति समाहितमित्याशङ्क्याह— **यद्यपीति** । सामिधेनीषु मन्त्रलिङ्गमात्रं न विनियोजकम्, अपि तु संख्याविधानसामर्थ्यमपि । तत्राधिकसंख्याश्रवणेन संख्यापूरकर्गन्तराकाङ्क्षायां सत्यामेव हि लिङ्गं विनियोजकम् । अतो लिङ्गमात्रेण विनियोगे नैतदुदाहरणमित्यस्वारस्यं यद्यपीत्यनेन ध्वनितम् । **फलवदङ्गत्वेनेति** । ननु फलवदफलन्यायो विधिसिद्धिरेव विधेः फलमिति वदतां प्राभाकराणां नेष्ट इति चेत्— सत्यम्; स्मृत्यप्रामाण्ये तद्बोध्यः कार्यरूपो विधिरप्यप्रमाणकः, अतः क विनियोगोऽस्य मन्त्रस्य स्यादिति फलवदफलन्यायोक्त्यैवोक्तप्रायम् । एतेन यद्भवनाथेनोक्तम्— 'सामान्यसंबन्धप्रमाणाभावान्मा भूल्लिङ्गेन विनियोगः, तथाऽप्यनुष्ठेयावच्छिन्नकार्याभिधायिनो रात्रिलिङ्गस्य मन्त्रस्य रात्रिदेवत्याष्टकाकार्याभिधायित्वमक्षतम्, रात्रिदेवत्यकार्यान्तरे प्रमाणभावात् इति, तदपि निरस्तम् । तथाभूतकार्यान्तर इव स्मृत्यप्रामाण्यपूर्वपक्षे अष्टकाकार्येऽपि प्रमाणाभावस्याविशेषादिति सर्वमवदातम् ॥

इदं तु चिन्त्यते– अष्टकाहोमो न रात्रिदेवत्यः । 'अष्टका पितृदेवत्ये' इति शाब्दवार्तिके 'प्रत्ययस्थात्कात्पूर्वस्य' (पा. ७-३-४४) इति सूत्रप्राप्तेत्वाभावनिपातनार्थे अष्टकायाः पितृ[1]देवत्यत्वस्मरणात्, तस्या रात्रिदेवत्यत्वेऽपि मन्त्रोऽयं न रात्रिदेवत्यः; किं तु एकाष्टकाशब्दवाच्यमाघकृष्णाष्टमीदेवत्यः, संवत्सरपत्नीत्वलिङ्गात् । 'एकाष्टकायां दीक्षेरन्नेषा वै संवत्सरस्य पत्नी यदेकाष्टका' इति हि श्रूयते । 'यां जनाः' इति मन्त्रोऽपि शाखान्तरे 'सा नो अस्तु सुमङ्गल्यष्टकायै सुराधसे स्वाहा' इति देवताचतुर्थ्यन्ताष्टकाशब्दयुक्तः पठ्यते । रात्रिश्रुतिस्तु रात्रावायतिं धेनुमिवेत्युपमानविशेषत्वेनाप्युपपन्ना, 'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' इति कालस्य कर्मसंज्ञायां द्वितीयोपपत्तेः, आयतीमित्यस्य गृहादिरूपकर्मान्तराविवक्षणेनाकर्मकत्वात् । एवमुपमानविशेषणत्व एव 'तेषामृग्यत्रार्थवशेन पादव्यवस्था' इति सूत्रितपादविभाग[2]सामञ्जस्यम् । रात्रिश्रुतिरुपमेयसमर्पकत्वेऽपि तिथिसामान्यवाचित्वेनोपपन्ना; नाष्टकापितृदेवत्यत्वविरोधिनी । तिथिसामान्यवाचिन्यपि हि सा प्रसिद्धा—'सोमस्य वै राज्ञोऽर्धमासस्य रात्रयः पत्नय आसन् । तासाममावास्यां च पौर्णमासीं च नोपैत्' इति, 'तस्मात्सदृशीनां रात्रीणाममावास्यायां च पौर्णमास्यां च देवा इज्यन्ते' इति च । अत एव 'तस्मात्सदृशीनाम्' इति श्रुतिमवलम्ब्य संकर्षे रात्रौ दर्शपूर्णमासयागः कर्तव्य इति पूर्वपक्षं कृत्वा रात्रिशब्दस्य तिथिसामान्यपरत्वोक्त्या तन्निराकरणं कृतम् । तस्मात् प्राभाकरैः कथं रात्रिदेवत्येऽष्टकाहोमे 'यां जनाः' इति मन्त्रस्य रात्रिलिङ्गाद्विनियोग इत्युक्तम्; कथं च ग्रन्थकृताऽष्टकाहोमस्य रात्रिदेवत्यत्वं 'यां जनाः' इति मन्त्रस्य रात्रिलिङ्गत्वं चाङ्गीकृत्य तत्र तस्य विनियोगमात्रं दूषितमिति ॥

अत्रेदं समाधानम्— माघकृष्णाष्टम्यां कर्तव्यं श्राद्धं पितृदेवत्यम्, तत्कालत्वात्साऽप्यष्टमी

---

1. म. देवत्यत्व॰ 2. अ. सामञ्जस्यात्

फलवत्त्वाभावान्न तादर्थ्यं मन्त्रस्य, येन सापेक्षता स्यात्। सत्यपि च मन्त्राप्रामाण्ये सकल-

---

पितृदेवत्येत्यभिप्रायं शाब्दवार्तिकम्; न तु पूर्वेद्युः सप्तम्यां कर्तव्योऽष्टकाहोमोऽपि पितृदेवत्य इत्यभिप्रायम्। स त्वष्टकादेवत्यः। अत एवाथर्ववेदे त्रयोदशर्चस्याष्टकोद्देश्यकहविःप्रक्षेपार्थस्य प्रथमा हव्युदासितेति सूक्तस्य संहिताविधिनाम्नि ग्रन्थेऽष्टकाहोमे विनियोग उक्तः– 'प्रथमाहव्युदासेत्यष्टकायां सर्वेण सूक्तेन त्रिर्जुहोति' इति। तद्धि सूक्तमष्टकोद्देश्यकहविःप्रदानार्थम्; 'एकाष्टके सुप्रजसः सुवीरा वयं स्याम पतयो रयीणाम्। एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम्' इत्यादितत्रत्यमन्त्रलिङ्गात्; 'इन्द्रपुत्रे सोमपुत्रे दुहितासि प्रजापतेः। कामानस्माकं पूरय प्रतिगृभ्णाहि नो हविः॥' इति सूक्तान्तत्रयोदशमन्त्रगताष्टकोद्देश्यकहविःप्रदानार्थत्वलिङ्गाच्च। त्रयोदशमन्त्रे इन्द्रपुत्रे सोमपुत्रे इति संबोधनाभ्यां बहुव्रीहिसमासेनेन्द्रसोममातृतया अष्टकैवोच्यते। तत्रेन्द्रमातृत्वं 'जजान गर्भम्' इति प्राचीनमन्त्रेण दर्शितम्। सोममातृत्वं गावामयनिकसोमक्रयणकालतया तदुत्पादकत्वोपचारात्। श्रूयते हि गवामयनप्रकरणे 'चतुरहे पुरस्तात्पौर्णमास्यै दीक्षेरन्। तेषामेकाष्टकायां क्रयः संपद्यते' इति। यां जनामन्त्रे रात्रिशब्दोऽप्यष्टकापरः, आथर्वणेऽष्टकासूक्ते सामगानामष्टकाखण्डे च 'संवत्सरस्य प्रतिमां यां त्वा रात्रिं यजामहे' इति अष्टकायामेव रात्रिशब्ददर्शनात्। तस्याष्टकापरत्वं च रात्रिसंबन्धाल्लक्षणया; न तु [1]तिथिसामान्यवाचितया, [2]तेष्वपि लक्षणोपपत्तौ शक्त्यन्तरकल्पनाऽयोगात्। आथर्वणिकानां परिशिष्टग्रन्थे 'अथातः पिष्टरात्र्याः कल्पं व्याख्यास्यामः' इति प्रक्रम्य 'यां देवाः प्रतिनन्दन्तीति रात्रिमावहेत्[3]' इति राज्ञां [4]रात्रीष्टौ रात्रिककर्मणि रात्र्यावाहने 'यां देवाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम्। संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली:' इति त्रयोदशर्चसूक्तगतमन्त्रस्य विनियुक्ततया तत्रत्यरात्रिशब्दस्याष्टकाविषयलक्षणाद्वारतया मुख्यरात्रिप्रकाशकत्वावश्यंभावेन तत्सामान्यात् तैत्तिरीयकाम्नातस्य यां जनादिमन्त्रगतरात्रिशब्दस्यापि तथात्वौचित्याच्च। सर्वासां तिथीनां [5]रात्रिसंबन्धे सत्यपि मन्त्रेष्वष्टकायां विशिष्य रात्रिपदं चेत्पतिसंयोजकप्रशस्तरात्रिसंबन्धात्। श्रूयते हि [6]तदर्थवादः— 'एकाष्टकायां दीक्षेरन्नेषा वै संवत्सरस्य पत्नी यदेकाष्टका तस्यां वा एष एतां रात्रिं वसति' इति। एवं मन्त्रे रात्रिपदस्याष्टकापरत्वान्मन्त्रकर्मणोः प्राभाकरैरुच्यमानं रात्रिदेवत्यत्वमष्टकादेवत्यत्वे पर्यवस्येदिति मत्वा तत्र दूषणं विहाय विनियोगप्रमाणाभावदूषणं ग्रन्थकृतोक्तम्। यद्वा रात्रिदेवत्यत्वकृत्वाचिन्तया इदं नेतव्यम्। एवमपि[7] विषयप्रदर्शनं दृश्यते; यथा— अर्थवादाधिकरणे 'वायव्यं श्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता' इत्यादि विषयवाक्यप्रदर्शनम्। न हि 'वायव्यं श्वेतमालभेत' इति विध्युद्देशे वायुदेवताविधिरस्ति। नापि 'वायुर्वा' इत्यादौ क्षिप्रदेवतासाध्यं कर्म क्षिप्रमेव फलं दास्यतीति देवतास्तुतिद्वारा कर्मस्तुतिरस्ति। 'स एवैनं भूतिं गमयति भवत्येव' इत्येतदनन्तरम् 'अतिक्षिप्रा देवतेत्याहुः सैनमीश्वरा प्रदह इत्येतमेव सन्तं वायवे नियुत्वत आलभेत नियुद्वा अस्य

---

1. अ. विधि　2. क. नित्यं तेष्वपि; विध्यन्तरेष्वपि　3. आवाहयेति　4. रात्रिष्वारात्रिककर्मणि
5. अ. रात्रिसंबन्धसत्त्वेऽपि 6. तथाऽर्थवादः 7. क. हि इत्यधिकम्

स्याप्रामाण्यं कुतस्त्यम् ? न हि मन्त्रस्य स्वारसिकमप्रामाण्यं येन शब्दमात्रे स्यात् ; अपि तु सापेक्षिकवाक्यत्वकृतम् । न च कृत्स्नस्य तदस्तीति कथमप्रामाण्यम् ? तस्मान्नैवं संगतिः संभवतीति पूर्वोक्तैव संगतिर्ज्यायसी । धर्मप्रमाणचिन्ताधिकारात्स्मृतीनामपि तत्र प्रामाण्यं प्रतिपाद्यत इति ।

---

भूतिर्धृत एव भूतिमुपैत्यप्रदाहाय भवत्येव ' इति श्रवणात् । अस्य ह्ययमर्थः-एषा वायुलक्षणा देवता, एनं यजमानं प्रदहः, दग्धुमीश्वरा । प्रदह इत्ययं ' ईश्वरे तोसुन्कसुनौ ' (पा. ३-४-१३) इति तुमर्थे कसुन्प्रत्ययान्तः । अतः क्षिप्रकारित्वाद्वायोरग्निरिति श्रुतेरग्निरूपापत्तिमत्त्वादग्निसख्याच्च क्षिप्रं दग्धुमपि वायुः समर्थः । अतो वायुदेवत्यं पशुं नालभेत, किं तु एतमेव सन्तं भूतिफलकर्माङ्गं श्वेतमेव सन्तं पशुं नियुत्वत्व[1]गुणकवायुदेवत्यमालभेत, अस्य हि वायोर्नियुन्नामा धृतिः धृतिसाधनं वाहनाश्वः । तेन वाहनेन धृत एव भूतिमुपैति; वाहनाश्वस्य यावती गतिः तावद्गतिभवनमेव प्राप्नोति ; न तु निजमतिक्षिप्रत्वमिति अतिक्षिप्रत्वप्रयुक्तदाहदोषः परिहृतो भवतीति । न चैवमुत्तरत्र श्रवणेऽपि पूर्वविध्युद्देशविहितायामेव वायुदेवतायां तत्र नियुत्वत्वगुणमात्रविधिरस्तु, न तु वायुदेवतापनय इति वाच्यम् । सगुणस्य केवलस्य च विशिष्टाविशिष्टभेदेन भेदात् ; वस्तुतः सगुणस्य देवतात्वे केवलाद्वायुशब्दादसमर्थताद्धितोत्पत्त्यसंभवाच्च । तस्माद्वायव्यमित्यत्र केवलवायुदेवताविधिरेव वाच्यः ; स च न संभवति, अग्रे दूषणात् । काम्यपशुयाज्यानुवाक्याकाण्डे ' पीवोन्नाँ रयिवृधः सुमेधाः, श्वेतः सिषक्ति नियुतामभिश्रीः, ते वायवे समनसो वितस्थुः, विश्वेन्नरस्वपत्यानि चक्रुः ' इत्यादीनां नियुत्वत्वगुणकवायुदेवताप्रकाशकानामेव याज्यानुवाक्यानामाम्नानाच्च । तस्मान्नियुत्वद्वाक्य एव देवताविधिः, पूर्वत्र तु वायुदेवताविधिसरूपार्थवाद इत्यलं विस्तरेण ॥

एवं मन्त्राप्रामाण्यं न प्रसज्यत इत्युक्तम् । तत्प्रसक्तिमभ्युपेत्याह— सत्यपीति । स्वारसिकं वेदत्वप्रयुक्तम् । शब्दमात्रे वेदमात्रे । अपि त्विति । ' विधिश्चानर्थकः क्वचित्, तस्मात्स्तुतिः प्रतीयेत, तत्सामान्यादितरेषु तथात्वम् ' (जै. १-२-२-२३) इत्यौदुम्बराधिकरणगुणसूत्रम् । अस्यार्थः— क्वचित् ' अप्सुयोनिर्वा अश्वः ' इत्यत्र ' अप्सु योनिरश्वः कार्यः ' इति विधिरनर्थकः, अशक्यत्वात् । तस्मात्तत्र स्तुतिरेव प्रतीयेत । तत्सामान्यात् विध्यसंभवरूपाविधायकत्वप्रयोजकधर्मवत्त्वेन तत्सामान्यादितरेषु ' ऊर्जं पशूनाप्नोत्यूर्जोऽवरुध्यै ' इत्यादिषु तथात्वम् अविधायकत्वमिति । एतत्सूत्रोक्तन्यायमवलम्ब्य हि मन्त्राप्रामाण्येन वेदमात्राप्रामाण्यमापादितम् । न चात्र मन्त्राप्रामाण्यप्रयोजकधर्मस्य वेदमात्रेऽनुवृत्तिरस्तीत्यर्थः । [2]न च तथाऽपि सर्वप्रयोगविधीनां स्मार्ताचमनप्रभृत्यङ्गविधिसंग्राहकत्वेन तत्सापेक्षत्वलक्षणमप्रामाण्यं सर्वचोदनानामपि स्यादिति सर्वाक्षेपलाभः शङ्कनीयः ; स्मृत्यप्रामाण्यपूर्वपक्षे स्मार्ताचमनादिकार्यत्वासिद्ध्या तत्संग्रहाप्रसक्तेः । एवं परोक्तसंगत्ययोगात्[3] स्वोक्तैव संगतिर्युक्तेति तां स्मारयन्नुपसंहरति— तस्मादिति ।

---

1. म. गुण 2. क. न च इति नास्ति

न चैवं चोदनैवेति प्रतिज्ञाव्याकोपः; तन्मूलत्वेन तदन्तर्भावेण वेतरेषां प्रामाण्या-त्स्वातन्त्र्येण प्रामाण्याभावात्। तदिह किं स्मृत्याचाराणां धर्मे प्रमाणत्वमुत नेति विचा-र्यते। तदर्थं च श्रुतिमूलत्वमेषाम्, उत भ्रान्त्यादिमूलत्वमिति विचारयितव्यम्। तत्र

प्रायेणानृतवादित्वात्पुंसां भ्रान्त्यादिसंभवात्।
चोदनानुपलब्धेश्च श्रद्धामात्रात्प्रमाणता॥

संभवद्भ्रमविप्रलम्भेषु पुरुषेषु न तावन्निर्विचिकित्समेव प्रामाण्यं स्वव्यवसानम्। अतश्चा-ननुष्ठानात्फलतोऽप्रामाण्यमेव। किं च, नैषां प्रत्यक्षादिमूलत्वेन प्रामाण्यम्, तेषां धर्माध-र्मयोरप्रवृत्तेः।

---

ननु [1]स्मृतेरपि धर्मप्रमाणत्वे चोदनैव धर्मे प्रमाणमिति चोदनासूत्रप्रतिज्ञाव्याकोप इत्या-शङ्क्य परिहरति— न चेति। चोदनैव धर्मे निरपेक्षं प्रमाणमिति प्रतिज्ञायास्तत्सा-पेक्षप्रमाणान्तरसद्भावेऽपि न व्याकोपः। स्मृतेश्चोदनानुमापकतया तदङ्गत्वेनान्तर्भावे चोदना-प्रामाण्यप्रतिज्ञयैव स्मृत्यादिप्रामाण्यप्रतिज्ञाऽप्यर्थाल्लभ्यत इति कथमपि न तद्व्याकोप इति परिहारार्थः। अनेन स्मृत्यादिविचारस्य संगत्यन्तरमपि सूचितम्। चोदनैव प्रमाणमिति प्रतिज्ञाव्याकोप इति शङ्कायां द्वेधा परिहारो घटते— स्मृतेरप्रामाण्येन, प्रामाण्येऽपि [2]श्रुतिमूलत्वेन वा। तत्राद्यं परि-हारमवलम्ब्य पूर्वः पक्षः। द्वितीयमवलम्ब्य सिद्धान्त इति। स्मृत्याचाराणामिति। आचारप्रामाण्य-मपि न्यायसाम्यादत्रैव विचार्यम्। आचाराधिकरणं त्वधिकशङ्कानिरासार्थमिति भावः। प्रायेणेति। अत्र पूर्वार्धेन पुरुषत्वसामान्यप्रयुक्तभ्रमविप्रलम्भादिशङ्कारूपोऽननुष्ठानरूपाप्रामाण्यहेतुर्दर्शितः। ननु 'धन्वन्निव प्रपा असि' इत्यादिमन्त्रलिङ्गानां [4]प्रपादिस्मृतिमूलत्वदर्शनेन मन्वादीनां तदंशे सत्यवादि-त्वावगत्या तद्दृष्टान्तेनाष्टकाद्यंशेऽपि तदवगतिर्भविष्यति इत्याशङ्क्य प्रायेणेति विशेषितम्। क्वचि-त्सत्यवादिनोऽपि पुरुषाः बहुशोऽन्यत्रासत्यवादिनो दृश्यन्ते। अतः क्वचित्संवादमात्रेणान्यत्रासत्यवा-दित्वशङ्का नापैतीति भावः। तृतीयपादेन सर्वथैवाप्रामाण्यहेतुर्मूलाभावो दर्शितः। स्मर्तॄणामाच-रितॄणां च स्मृतिर्निबन्धनीया। अनुष्ठेयार्थस्मरणं हि मूलप्रमाणापेक्षम्। सा चातीन्द्रिये धर्मे प्रत्यक्षा-दिज्ञानं न संभवतीति चोदनामूला वाच्या। चोदना अग्निहोत्रादिष्विवाष्टकादिषु नोपलभ्यते। अनुपलभ्यमानाऽपि चेत्कल्प्यते तदाऽष्टकादीनां धर्मत्वमेव किमिति साक्षान्न कल्प्यते। किमर्थं चोदनाकल्पनापूर्वकं तत्कल्प्यते? क्रमिकवर्णपदादिरूपेणानुपलभ्यमानाऽपि चोदना कथमर्थं प्रतिपादयेदित्याशयः॥

चतुर्थपादेनाप्रामाण्योपसंहारः। श्लोकं व्याचष्टे— संभवदिति। ननु उच्चार्यन्त एवाष्ट-

---

1. म. स्मृतिरपि धर्मप्रमाणमिति 2. क. श्रुतिमूलकत्वेन वा

न च स्वातन्त्र्येण वेदवत्, पौरुषेयत्वात्। न चोदनामूलत्वेन, तदनुपलम्भात्। न ह्यनुपलभ्यमानाश्चोदनाः स्वप्रमेयं प्रतिपादयन्ति। न चासां प्रत्यक्षेणोपलम्भसंभवः, अनुच्चार्यमाणत्वात्। उच्चार्यमाणत्वे वा स्मृतिप्रणयनवैयर्थ्यम्। प्राक् पठिता अपि संप्रति पुरुषक्षयादुत्सन्ना इति चेन्न, विकल्पासहत्वात्। यो ह्युत्सादनं चोदनानां वदति, स वक्तव्यः— किमेका काचिच्छाखा स्मार्तश्रुतिसंघात्मिका पूर्वमासीत्सा चेदानीमध्येतृक्षयादुत्सन्नेति कल्प्यते, किं वा बह्वीषु शाखास्वितस्ततः स्मृतिमूलभूताः श्रुतयः पठिताः संप्रत्युत्सन्ना इति। तत्र सहस्रं सामशाखा एकशतमध्वर्युशाखा एकविंशतिशाखं बाह्वृच्यमित्यादिशाखाप्रमाणस्य परम्परया

---

कादिमूलश्रुतयः। 'न ह्ययं स्थाणोरपराधो यदेनमन्धो न पश्यति' इति न्यायेन तत्रैवानुपलम्भमात्रमित्याशङ्क्य तथा सति श्रुतिभ्य एवाष्टकाद्यवगतिसम्भवेन स्मृतिप्रणयनं व्यर्थं स्यादित्याह— उच्चार्यमाणत्वे वेति। ननु स्मृतिमूलभूताश्चोदनाः प्राक् पठिता दृष्ट्वा स्मृतयः प्रणीताः। ताश्चोदना इदानीमुत्सन्नाः। 'तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते' इत्यापस्तम्बवचनान्न स्मृतिप्रणयनवैयर्थ्यमपि, इदानीन्तनान् प्रति तदुपयोगादित्याशङ्कते— प्रागिति। उत्सन्नासु चोदनासु तद्दर्शनाभावादशक्यं स्मृतिप्रणयनम्। तच्चेद्भविष्यदुत्सादशङ्कया तदानीं विद्यमानश्रुत्यर्थानप्यशेषान् मन्वादयो निबध्नीयुरिति दूषणं स्फुटं मत्वा दूषणान्तरमाह— विकल्पासहत्वादिति। किं स्मृतिमूलश्रुतीनां शाखारूपेणोत्सादः? उत पठ्यमानशाखास्वेव किंचित्किंचिद्वाक्यरूपेण? पक्षद्वयमपि न संभवति। समग्रस्वस्वशाखाध्ययनव्यग्रेषु तत्र स्वरवर्णभ्रंशमात्रमप्यसहमानेषु मेधावलशालिष्वसंख्येषु पुरुषेषु जाग्रत्सु तथाविधशङ्कापिशाचिकायां पदवर्णोत्सादशङ्कया कापि वेदवाक्यधीर्न स्यात्। तत्र तत्राङ्गप्रधानोत्सादशङ्कया सर्वाङ्गप्रधानोपसंहाराधीनप्रयोगविधिनिर्णयोऽपि न स्यात्। तस्मादापस्तम्बवचनमपि न्यायमूलत्वात्, न्यायस्य चाभासत्वादनादरणीयमिति भावः। विप्रकीर्णशाखात्राददूषणमुपसंहरति— तदिति[2]। नित्यानुमेयत्वश्रुतिमूलत्वपक्षदूषणमपि अनुपदमेत्र भविष्यतीत्यभिप्रायस्तावच्छब्दः। अन्धपरंपरान्यायं विवृणोति— 'यो हीति। यथा केनचिदन्धेन 'रक्तोऽयं पटः' इत्युक्ते यदि सोऽन्यमन्धं वक्तारं निर्दिशेत्, द्वितीयोऽप्यन्यमन्धमिति क्वापि मूलतया चक्षुष्मतो न प्रवेशस्तदा तस्य पटस्य तयाऽन्धपरंपरोक्त्या रक्तिमा न सिद्ध्यति, एवमद्यतनानां वर्तमानस्मृत्या मूलस्मृत्यनुमानं तन्निबन्धस्तत्पूर्वस्मृत्या, तत एव तत्तन्निबन्धॄणां तत्तत्पूर्वपूर्वस्मृत्येत्येवं क्वचिदपि मूलश्रुतिद्रष्टुः कस्यचित्प्रवेशाभावे सा श्रुतिर्न सिद्ध्यतीत्यर्थः। ननु पौरुषेयवाक्यं स्वसमानविषयमूलप्रमाणापेक्षमित्यन्धपरम्परायां पटरक्तिमा न सिध्यति इत्यस्तु; अनुमानपरंपरायामनुमेयविषयप्रत्यक्षाप्रवेशेऽप्यनुमेयं कुतो न सिध्यति? अनुमाने पक्षधर्मताबलात्प्रमाणान्तरानुल्लिखितपक्षसाध्यसंबन्धसिद्ध्यभ्युपगमात्। अन्यथा क्वचिदपि नित्यानुमेयसिद्धिर्न स्यादिति चेत्—उच्यते

---

1. वाक्योत्साद० 2. इदं प्रतीकं मूलमातृकायां न दृश्यते। अत्र मूलग्रन्थः त्रुटित इति भाति।

सर्वलोकस्मरणान्नाधिका शाखा संभावयितुं शक्यते। नापि पठ्यमानानामेव शाखानामव-हिताध्येतृकाणां मध्ये कासांचिच्चोदनानामुत्सादसंभवः॥

न च संप्रत्यपि पठ्यन्त एव विप्रकीर्णस्मृतिमूलभूताः श्रुतय इति युक्तं स्मृतिप्रण-यनवैयर्थ्यादि ह्युक्तम्। तत्र तावदिदानीमतीतकाले पठिताः श्रुतयः स्मृतीनां मूलम्; नापि नित्यानुमेया अन्धपरम्परान्यायात्। या हि चोदना न कदाचिदुच्चार्यते तस्यां सर्वपुरुषप्रत्य-क्षादिप्रसराभावाद्दुर्लभमस्तित्वम्॥

ननु स्मृतिलिङ्गवशेनानुमानं प्रसरत्येव सर्वेषां लिङ्गादिकल्प्यास्विव। विषम उपन्यासः।

---

स्मृतिलिङ्गेनाष्टकाकर्तव्यतादिप्रमितिजनकश्रुतिसद्भावोऽनुमेयः; न तु गूढनिक्षिप्तकृपणधनवत्कार्यो-नुपयुक्तं श्रुतिसद्भावमात्रम्। अनुमितश्रुतेरष्टकाकर्तव्यतादिप्रमित्यजनकत्वे चोदनैव धर्मे प्रमाणमिति प्रतिज्ञानस्याष्टकादीनां धर्मत्वस्य वा व्याकोपप्रसङ्गात्, अनुमितश्रुतेः स्मृतिमूलत्वाभावप्रसङ्गाच्च। स्मृतिमूलत्वं हि स्मर्तॄणां स्मृतिनिबन्धनहेतुतदर्थविषयस्मरणमूलानुभवजनकत्वम्। स्मृतेः स्वमूलत्वं विना व्याप्त्या श्रुतिमात्रानुमापकत्ववादे च व्याप्तिरेव न सिध्यति, कार्यकारणभावादिमूलानुकूल-तर्काभावात्। एवं चानुच्चार्यमाणस्य क्रमिकवर्णाद्यनुसंधानाभावेन शाब्दप्रमितिजनकत्वासंभवात् नित्यानुमेयपक्षे अष्टकाकर्तव्यतादिप्रमितिजनकस्मृतिमूलश्रुत्यस्तित्वं स्मृतिसमानविषयश्रुत्यस्तित्वं च दुर्लभमिति भावः। स्यादेतत्। कदाऽप्युच्चारणाभावेन नित्यानुमेयवेदस्य क्रमिकवर्णाद्यनुसंधा-नासंभवेऽप्यष्टकाकर्तव्यतादिज्ञापकत्वेनानुमितस्य तद्बोधकत्वं भविष्यति। न च तज्ज्ञापकत्वेन ज्ञानं शाब्दबोधसामग्री, ज्योतिष्टोमादिवाक्येष्वनधिगतार्थलौकिकवाक्येषु च तदभावादिति वाच्यम्। तेषु क्रमिकवर्णाद्यनुसंधानं शाब्दबोधसामग्री, नित्यानुमेयवेदेषु [1]ज्ञापकत्वेन ज्ञानमिति व्यवस्थाभ्युपगमात्। वृषभमानयेत्युक्तौ [2]वृषभर्षभपदत्वसंदेहेऽपि पुंगवज्ञापकत्वेन ज्ञातस्य पदस्य विनैव वर्णावलिनिश्चयं पदार्थस्मृतिजनकत्वदर्शनेन तथैव वाक्यार्थज्ञानेऽपि सामग्रीद्वैविध्यकल्पनो-पपत्तेः। अन्यथा लिङ्गादिकल्प्यश्रुतिषु का गतिः? अथोच्येत—लिङ्गकल्प्यश्रुतीनां वेदमध्ये समा-म्नानाभावेऽपीदृशेन रूपेण कल्पनीयेति [3]पौरुषेयं संभवतीति तदप्रकृतेऽपि तुल्यम्। न च तथा सति नित्यानुमेयत्वभङ्गः। 'अष्टकाः कर्तव्याः, अष्टकाः कुर्यात्' इत्यादिरूपेण पौरुषेयकल्पनाया नानाप्रकारतया कीदृग्रूपे वेदत्वं वर्तत इत्यस्याप्रत्यक्षत्वमात्रेण नित्यानुमेयत्वोक्तेः। अन्यथा अनुसंधानोच्चारणक्रमाधीनक्रमविशिष्टवर्णपदसंघातरूपवाक्यत्वाभावप्रसङ्गादित्याशङ्कते— नन्विति। श्रुतिलिङ्गादीनामिव पौरुषेयीणां स्मृतीनां न श्रुतिमन्तरेणानुपपत्तिरस्ति। किं तु स्मार्तस्मृतिनिबध्यमा-नार्थविषयज्ञानमन्तरेण तस्यापि ज्ञानस्यार्थमन्तरेणानुपपत्तिः, न श्रुतिं तज्ज्ञानं वाऽन्तरेण। तस्मादाप्तस्य

---

1. अ तदर्थज्ञापकत्वेन　2. क. वृषवृषभर्षभपदत्वसंदेहेऽपि　3. इति हि पौरुषेयमुच्चारणं
4. स्मर्तुः

लिङ्गादयो हि सर्वपुरुषप्रत्यक्षाः श्रुतिमन्तरेणानुपपद्यमाना युक्तं यत्तस्यां निश्चयमादधति। स्मृतिवाक्यरचना तु पौरुषेयी पदार्थविषयोपलभ्यते ; तद्विषयमेव रचयितुर्ज्ञानं कल्पयति। अष्टकाकर्तव्यताविषयं च स्मृतिवाक्यमिति नूनमयमष्टकाकर्तव्यतां वेदेत्येतावत्प्रथमं कल्पयति, न श्रुतिस्वरूपम्, नापि श्रुतिज्ञानम्। एवमर्थज्ञाने स्मृतिकारस्य कल्पिते तस्मात् ज्ञानलिङ्गाज्ज्ञेयभूतार्थानुमानम्, न श्रुतिकल्पनम्। एवं स्मृतिकारान्तरस्यापि स्मृत्यन्तरलिङ्गादर्थ एवानुमानमिति निष्प्रमाणिका श्रुतिकल्पना स्यात्। अथोच्येत— न खलु परकीयेन ज्ञानेन झटित्येव ज्ञेयनिश्चयः, मूलानुसंधानसापेक्षत्वात्। तत्र यदि स्मृतिकारस्यार्थविषयज्ञानमूलमनुसंदधानः स्मृत्यन्तरमेव संभावयेत्, तदपि ज्ञानस्यैव लिङ्गं नार्थस्य। एवं ततः पूर्वतरमपि स्मरणं ज्ञानस्यैव लिङ्गं नार्थस्येति न क्वचिदर्थनिश्चयो लैङ्गिको लभ्यत इति श्रुतिरेव कल्पयितव्या। यद्येवं श्रुतावपि तुल्यमेवैतत्। स्मृतिकारस्य हि मूलतया श्रुतिज्ञानमेव प्रथमं कल्प्यते, न श्रुतिसद्भावः। श्रुतिविषयेण तु ज्ञानेन ज्ञेयभूतश्रुतिनिर्णयः ; परज्ञानेन च तद्विषयश्रुतिनिश्चयो मूलानुसंधानसापेक्षः। मूलं च स्मृतिकारस्य स्मृत्यन्तरमेव। तदपि

---

ज्ञानानेन्गतं वाक्य ज्ञानानुमापकम्। ज्ञानं चार्थाविनाभावे। तेनार्थे हि विनिश्चय इति त्वदुक्तप्रक्रियया ज्ञानार्थयोः कल्पनाऽस्तु नाम; श्रुतिकल्पना न सिध्येदिति दूषयति— **विषम इत्यादिना**। ननु, ज्ञानेनार्थनिश्चयं वदता तन्मूलप्रमाणमप्यन्वेषणीयम्; अन्यथा ज्ञानमात्रस्यार्थाव्यभिचारित्वाभावेन स्मर्तुराप्तत्वासिद्धेः। अतो मूलप्रमाणतया श्रुतेरपि कल्पनं सिध्यति। न च स्मृत्यन्तरं मूलतया संभावयितुं शक्यम्; स्मृत्यन्तरस्यापि स्मर्यमाणार्थज्ञान एव लिङ्गत्वेन मूलप्रमाणावगतिं विना ततोऽर्थनिश्चयासिद्धेः। अतोऽर्थनिश्चयार्थम् प्रतिहता [1]कल्पनेत्याशङ्कते— **अथोच्येतेति**। दूषयति— **यद्येवम् इति**। श्रुतावपि [2]तुल्यमित्येतद्विवृणोति— **स्मृतिकारस्य हीति**। [3]यथैव स्मृत्या स्मर्तुः स्मर्यमाणार्थज्ञानेऽनुमिते तेन प्रागेव नार्थनिश्चय इति मूलप्रमाणान्वेषणम्, एवं स्मृतिनिबन्धने श्रुतिज्ञानमेव साक्षादुपपादकमिति स्मृत्या श्रुतिज्ञाने कल्पिते श्रुतिकल्पनार्थं श्रुतिसद्भावसमर्पकं मूलप्रमाणमन्वेषणीयं स्यात्। ज्ञानेन ज्ञेयनिश्चये मूलप्रमाणापेक्षायास्त्वयैवोक्तत्वादित्यर्थः। अस्तु मूलप्रमाणापेक्षा, को दोष इत्याशङ्क्याह— **मूलं चेति**। श्रुतिकल्पनायां मूलमन्विष्यमाणं न श्रुतिरेव भवितुमर्हति, आत्माश्रयापत्तेः। अतः स्मृतिकारस्य मनसि विपरिवर्तमानं मूलं स्मृत्यन्तरमेव वाच्यम्; तदपि स्मृत्यन्तरमर्थज्ञानं कल्पयत्तन्मूलत्वेन [4]श्रुतिज्ञानमेव कल्पयेत्, न श्रुतिम्। तच्छ्रुतिज्ञानं कल्पयति चेत्त्वदुक्तमूलप्रमाणं कल्पयित्वैव कल्पयेत्। तत्रापि मूलप्रमाणं तव स्मृत्यन्तरमेव भवेत्।

---

1. श्रुतिकल्पना 2. क. तुल्यमेतदित्येतद्विवृणोति 3. यदेव 4. म. श्रुतिज्ञानं

चार्थज्ञानद्वारेण श्रुतिज्ञानस्यैव लिङ्गं न श्रुतिसद्भावस्येति न क्वचित्कस्यचिदपि श्रुतिसद्भावनिश्चयो लैङ्गिको लभ्यते। लिङ्गादीनि तु श्रुतिसद्भावमेव कल्पयन्तीत्युक्तो विशेषः। तेन यदि परकीयेण ज्ञानेन प्रागेवार्थनिश्चयस्ततोऽर्थस्मरणपरम्परयाऽर्थस्यैव ज्ञानान्न श्रुतिसिद्धिः। अतः स्मृत्यन्तरमेव मूलं स्यात्, अन्धपरम्परया च रूपनिश्चयस्तदा स्यात्; चैत्यवन्दनादीनामपि पुंवाक्यपरम्परया धर्मत्वानुमानं स्यात्। अथ मूलानुसंधानसापेक्षं ततो यथा वयं मानवीयात्स्मरणान्मनोरर्थविषयं श्रुतिविषयं च ज्ञानमात्रं कल्पयित्वा श्रुतिसद्भावमनि-

तदपि तृतीयं स्मृत्यन्तरमर्थज्ञानस्यैव लिङ्गमित्यादिपूर्वोक्तप्रक्रियैवावर्तते। अतोऽस्यां परम्परायां न क्वापि श्रुतिसद्भावनिर्णयो भवेदित्यर्थः। लिङ्गादिश्रुतिकल्पने तु नैवं श्रुतिसद्भावनिर्णयप्रसक्तिः। न हि तत्पौरुषेयवाक्यमिव श्रुतिज्ञानापेक्षम्। येन ज्ञानेनार्थनिश्चये किंचिन्मूलप्रमाणमन्वेषणीयं स्यात्; किं तु श्रुतिस्वरूपापेक्षमिति पूर्वोक्तवैषम्यं स्मारयति— **लिङ्गादीनीति**। नित्यानुमेयपक्षे प्रागुक्तदूषणजातं श्रोतृबुद्धिसौकर्याय संकलयति— **तेनेति**। यदि ज्ञानेन ज्ञेयनिश्चये मूलप्रमाणाभ्युपगमे श्रुतिज्ञानेन श्रुतिनिश्चयेऽपि तदपेक्षया श्रुतिसद्भावनिर्णयो न भवेदिति भिया ज्ञानेन प्रागेवार्थनिश्चयमभ्युपैपि, तदा स्मर्तॄणामर्थज्ञानेनार्थस्यैवानुमानमिति स्मृतिमूलतया न श्रुतिः सिध्येत्; स्मृतिपरम्परयैवार्थसिद्धिरन्वेषणीया स्यादित्यर्थः। ननु आप्तस्मृतिपरम्परयैवाष्टकाकर्तव्यताद्यर्थस्य सिद्धिरस्तु, वृद्धप्रयोगपरम्परया गवादिशक्तेरिवाध्यापकपरम्परया वेदपाठक्रमस्येव चेति तटस्थशङ्कां निराकरोति— **अन्धपरम्परया चेति**। युक्तं मूलप्रमाणान्तराभावेऽपि वृद्धप्रयोगमात्राच्छब्दशक्तिनिश्चय इति, गृहीतशक्तिकस्य गवादिशब्दश्रवणे सति तदर्थप्रतीतिरूपकार्यदर्शनात्। युक्तं च अविच्छिन्नसंप्रदायाध्यापकपरम्परामात्राद्वेदपाठक्रमस्य निश्चय इति, तस्य प्रत्यक्षग्राह्यत्वात्। न चेहाष्टकाद्यनुष्ठाने सति अपूर्वादिरूपतत्कार्यदर्शनमस्ति। न चाष्टकादिधर्मत्वं मन्वादिप्रत्यक्षताईम्[1]। अतः [2]स्मृतिपरम्परामात्रेण तत्सिद्धिरन्वेष्या। तथा सत्यन्धपरम्परयाऽपि रूपसिद्धिः स्यादित्यर्थः। दूषणान्तरमाह— **चैत्येति**। मन्वादीनां बुद्धादीनां चाप्तत्वानाप्तत्वविशेषानवगमात् बुद्धादिस्मृतिपरम्परया चैत्यवन्दनकर्तव्यतादिसिद्धिरपि स्यादित्यर्थः। एवं ज्ञानेनार्थनिश्चयो मूलानुसंधानानपेक्ष इति पक्षे स्मृतिमूलश्रुत्यसिद्धिरुक्ता। प्रसङ्गागतं चान्यदुक्तम्। अथ तत्सापेक्ष इति पक्षेऽपि तामाह— **अथेति**। अस्माभिस्तावन्मनुस्मृत्या मनोरर्थविषयं श्रुतिविषयं च ज्ञानं कल्पयित्वा श्रुतिसद्भावे मूलं मनोः प्रवृत्तं प्रमाणं किमित्यन्विष्यते। एवं मनुनाऽपि वृद्धमनुस्मृत्या तस्यार्थविषयं श्रुतिविषयं च ज्ञानमात्रं कल्पयित्वा तस्य श्रुतिसद्भावे मूलं किं प्रमाणं प्रवृत्तमित्यन्विष्यते। एवं तस्य तस्यापीति न क्वापि श्रुतिसद्भावसिद्धिः। ततश्चोभयथाऽपि श्रुत्यसिद्धेर्नित्यानुमेयत्वपक्षो न युक्त इत्युत्सादपक्षं विप्रकीर्णपक्षं वाऽवलम्ब्य स्मृतिपरम्परायां केनचित्स्मर्त्रा साक्षादष्टकादिश्रुति-

1. क. प्रत्यक्षार्ह 2. स्मृति॰

श्रित्य तन्निश्चयाय मनोः श्रुतिसद्भावमूलप्रमाणं मृगयामहे, तथा मनुरप्यन्यस्य, सोऽप्यन्यस्येति न श्रुतिसद्भावसिद्धिः ॥

एवमुभयथाऽपि श्रुतिर्नित्यानुमेया न सिध्यतीति तन्मूलत्वेन न स्मृतीनां प्रामाण्यम्; अतः श्रद्धामात्रविजृम्भितं स्मृतिप्रामाण्यमिति प्राप्तेऽभिधीयते—

वैदिकैः स्मर्यमाणत्वात्तत्परिग्रहदार्ढ्यतः ।
संभाव्यवेदमूलत्वात्स्मृतीनां वेदमूलता ॥

य एव हि वेदस्यैव धर्ममूलता नान्यस्येति आस्थिता मन्वादयस्तेषामष्टकाधर्मादिषु धर्मत्वस्मृतिर्न कथंचनोपपद्यते न यदि वेदमूलता । तथा वैदिकानामेवाविगीतपरम्परया परिग्रहः, वैदिकत्वस्मरणं च शिष्टानां नासति वेदमूलत्वेऽवकल्प्यते । संभवति च त्रैवर्णिकानां

---

मुपलभ्य स्मृतिः प्रणीतेत्येवोपपादनीयमिति भावः । **वैदिकैरिति** । अष्टकादिस्मृतीनां मूलं भ्रान्त्यादिरूपं चोदनारूपं वा किंचिदवश्यं कल्पनीयम् । तत्र किंकल्पना युक्तेति विशये चोदनाकल्पनैवेत्यत्र हेतुत्रयमुच्यते— ये मन्वादयो वैदिकाः 'वेद एव धर्मे मूलम्' इति प्रतिजानते तैः, स्मर्यमाणत्वान्निबध्यमानत्वात्, ये वैदिकाः वेदोक्तानेवानुतिष्ठन्ति तत्कर्तृकपरिग्रहदार्ढ्यात् अविगीतपरिग्रहात्, स्मर्तॄणां त्रैवर्णिकत्वेन वेद[1]पारिश्रमवत्तया वेदमूलत्वसंभवाच्च, स्मृतीनां वेदमूलतैव युक्तेत्यर्थः । श्लोकं व्याचष्टे— **य एव हीति** । **आस्थिताः** । 'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्' [2]इत्यादिभिः प्रतिज्ञातवन्तः । स्थिता इति पाठे वेद एव धर्ममूलमिति मत्वा वेदार्थनिबन्धन एव व्यवस्थिता इत्यर्थः । उपनयनप्रपातटाकनिर्माणातिथिसत्काराभयप्रदानादिधर्मा हि 'अष्टवर्षं ब्राह्मणमुपनयीत' 'धन्वन्निव प्रपा असि' 'स्थलयोदकं परिगृह्णन्ति, 'यथाऽतिथय आगताय सर्पिष्वदातिथ्यं क्रियते तादृगेव तत्' 'तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति' इत्यादिविधिमन्त्रार्थवादमूलाः स्मृतिषु निबध्यन्ते । तेन स्मर्तॄणां वैदिकार्थग्रथनपरताऽवसीयत इति भावः । परिग्रहदार्ढ्येत इत्येतत् अविगीतानुष्ठानपरतया व्याख्याय [3]विधान्तरेण व्याचष्टे— **वैदिकत्वस्मरणं चेति** । अद्यत्वेऽपि वेदाभियुक्ताः मन्वादिस्मृतीनां वेदमूलत्वं स्मरन्ति । स्मरणवचनेन 'यद्वै किं च मनुरवदत्तद्भेषजम्' इति श्रुतिजन्यानुभवमूलं तेषां ज्ञानमिति दर्शितम् । '[4]यः कश्चिन्मानवो धर्मो भृगुणा परिकीर्तितः । स सर्वोऽभिहितो वेदे' इत्यादिस्मर्तृवचनमपि वैदिकत्वस्मरणमित्यनेन संगृहीतम् । वेदमूलत्वसंभावनायां हेतुगर्भं मन्वादीनां विशेषणम्— **त्रैवर्णिकाना-**

---

1. परिक्रम 2 अ. इति 3. क. विधान्तरेणापि 4. यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः

वेदसंयोग इति तन्मूलत्वमेवाध्यवसीयते। कथमनुच्चारितानां मूलत्वोपपत्तिरिति चेत्, उच्चार्यन्त एव स्मृतिमूलभूताः श्रुतयः संप्रत्यपि विप्रकीर्णाः काश्चित्क्वचित्कस्यांचिच्छाखायाम्। विप्रकीर्णत्वाच्च शाखान्तराध्यायिभिः शाखान्तरगतानामनुपलम्भात्तादर्थ्येनार्थनिबन्धनम्। उपलम्भेऽपि वा मन्दधीभिरनुपसंहरणीयानामुपसंहारफलं स्मृतिप्रणयनमिति न वैयर्थ्यम्। अतः स्मृतयः प्रमाणमिति सिद्धम्॥

---

मिति। वेदमूलत्वमयोग्यतापराहतमिति शङ्कते— **कथमिति**। अनुच्चारणासिद्ध्या परिहरति— **उच्चार्यन्त एवेति**। कथं तर्हि सर्वाध्येतृसाधारण्येन नोपलम्भ इत्यत आह— **विप्रकीर्णा इति**। विप्रकीर्णत्वं विवृणोति— **काश्चिदिति**। ननु विप्रकीर्णानां श्रुतिवाक्यानामुपलम्भसौकर्यार्थं तान्येव संकलय्य विलिख्यन्ताम्। किमर्थं स्मृतिनिबन्धनम् इत्याशङ्क्याह— **अर्थनिबन्धनमिति**। वेदवाक्यानां प्रायेण गूढार्थत्वात्तदर्थानां स्फुटीकरणाय स्ववाक्यैर्निबन्धनमित्यर्थः। एवं शाखान्तराध्यायिनामनधीयमानशाखान्तरगतवाक्यार्थप्रतीत्यर्थं तदर्थनिबन्धनमित्युक्तम्। तत्तच्छाखाध्यायिनामपि तदपेक्षामाह— **उपलम्भेऽपि वेति**। स्वस्वशाखागतानामपि परप्रकरणगतानां तत्तत्प्रकरण्यनन्वयिनां प्रत्यक्षविधीनां मन्त्रार्थवादकल्प्यविधीनां च स्मृतिमूलानां मन्दधीभिर्दुर्बोधत्वात्, तद्बोधसौकर्यार्थमपि स्मृतिप्रणयनमित्यर्थः। नन्वेवं सत्यग्निहोत्रादीनामष्टकादिकर्मणां च प्रत्यक्षश्रुतिमूलत्वाविशेषेण श्रौतस्मार्तविभागो न स्यात्। 'ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्य' इति गार्हस्थ्यस्य[1] प्रत्यक्षश्रुतिविहितत्वोक्तिश्च न समञ्जसा स्यात्। अतो विप्रकीर्णवादस्यायुक्तत्वादुत्सादनित्यानुमेयपक्षयोश्च प्रागेव दूषितत्वादमूलत्वेन स्मृतीनामप्रामाण्यमेवाप्तमित्याशङ्कामुपसंहारव्याजेन निराकरोति— **अत इति**। अयमाशयः— स्मार्तानि प्रत्यक्षश्रुत्याविहितानीति न नियमः शक्यशङ्कः; प्रत्यक्षश्रुतिविहितानामेव गार्हस्थ्यधर्माणामुपनयनादीनां च स्मार्तत्वसंप्रतिपत्तेः। श्रौतानामग्निहोत्रादीनां मन्वादिस्मृतिषु विधानस्य कल्पसूत्रेषु प्रयोगनिबन्धनस्य दर्शनात्। किं तु साक्षात्फलवन्त्यसाक्षात्फलवन्त्यग्निहोत्रेष्टिपशुसोमादिकर्माणि श्रौतानि, तदुपकारकाण्याह्निकसंस्काराद्याचाररूपाणि स्मार्तानीति व्यवस्था। कुतः? 'सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु। यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत्॥' इत्यादिवचनैराह्निकरूपाणाम् 'एवमेनः शमं याति बीजगर्भसमुद्भवम्' इत्यादिवचनैरुपनयनान्तसंस्काररूपाणाम् 'आचारहीनं न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः' इत्यादिवचनैः सामान्यतस्तेषामन्येषां च स्मार्तानां सर्वेषामाचाराणां हि शुचित्वादिसंपादनद्वारा फलवदग्निहोत्रादिकर्मोपकारकत्वमवगतम्। अनेनैवाभिप्रायेण श्रुतावपि कर्माचारविभागो दर्शितः— 'यान्यनवद्यानि कर्माणि, तानि सेवितव्यानि, यान्यस्माकं सुचरितानि, तानि त्वयोपास्यानि' इति। स्मृतीनां प्राधान्येनाचारविषयत्वेऽपि क्वचित्क्वचित् 'अष्टकाः पुष्टिकामेन कर्तव्याः' इत्यादौ तत्तत्प्रसङ्गादिसमागतं काम्यविषयत्वम्। गार्हस्थ्यस्यैव प्रत्यक्षविधानो-

---

1. विशिष्य इत्यधिकः पाठः॥

## विरोधाधिकरणम् ॥ २ ॥

# विरोधे त्वनपेक्षं स्याद्सति ह्यनुमानम् ॥ ३ ॥

---

### ॥ जैमिनीयन्यायमाला ॥

औदुम्बरी वेष्टनीया सर्वेत्येषा स्मृतिर्मितिः ।
अमितिर्वेति संदेहे मितिः स्यादष्टकादिवत् ॥ ४ ॥

औदुम्बरीं स्पृशन्गायेदिति प्रत्यक्षवेदतः ।
विरोधान्मूलवेदस्याननुमानादमानता ॥ ५ ॥

प्रत्यक्षानुमितश्रुत्योर्गृह्य व्याघातदर्शनात् ।
अमात्वे शङ्किते बाधोऽनुमानस्यात्र वर्ण्यते ॥ ६ ॥

परप्रत्यक्षवेदोऽत्र मूलं चेद्दृष्टनस्य तत् ।
अस्त्वेवमप्यनुष्ठानं स्वप्रत्यक्षानुरोधतः ॥ ७ ॥

---

उत्सृष्टस्य स्मृतिप्रामाण्यस्यापवादः क्रियते । अत्र प्रत्यक्षश्रुतिविरुद्धाः स्मृतय उदाहृत्य विचार्यन्ते— किं प्रमाणमप्रमाणं वेति । तदर्थं च पूर्ववदेव स्मृतिमूलत्वं भ्रान्त्यादिमूलत्वं वेति चिन्तनीयम् । अत्र पूर्वाधिकरणं समस्तमेव पूर्वः पक्षः । न च प्रत्यक्षश्रुतिविरोधात् स्मृति-

---

किन्तु प्रशंसार्था । 'ब्रह्मचर्यं समाप्य गृही भवेत्, गृही भूत्वा वनी भवेत्, वनी भूत्वा प्रव्रजेत्' इति सर्वेषामाश्रमाणां प्रत्यक्षविधानादिति ॥

---

विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् ॥

आपवादिकीं संगतिमाह— **उत्सृष्टस्येति** । उत्सर्गतः प्राप्तस्येत्यर्थः । **प्रत्यक्षेति** । 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इत्यादिश्रुतयः प्रत्यक्षाः । 'औदुम्बरी सर्वा वेष्टयितव्या' इत्यादिस्मृतयस्तद्विरुद्धाः । यज्ञशालायां सदसि मन्त्रेण निहितोदुम्बरप्रकृतिका स्थूणा औदुम्बरी । **पूर्वाधिकरणमिति** ।

मूलश्रुतिकल्पनानवक्लृप्तिः, श्रुतिद्वयसंभवात् व्रीहियवादिश्रुतिवत्। यत्र हि द्वयोरसंभवस्तत्रैकविषयेऽपि प्रत्यक्षेणेतरविषयकमनुमानं प्रमेयापहारादनायासेन निराक्रियते वह्नाविव शैत्यानुमानम्। यत्र तु द्वयसंभवस्तत्र शीघ्रप्रवृत्तमपीतरन्नेतरस्य विषयमपहरतीति तद्विषयमनुमानं न शक्नोति प्रतिषेद्धुम्। संभवति च युगपदनुपसंहरणीयार्थमपि श्रुतिद्वयं व्रीहियवबृहद्रथन्तरग्रहणादिविषयश्रुतिवदिति प्रत्यक्षेणापि स्पर्शनविधिना सर्ववेष्टनश्रुतिविषयमनुमानं न शक्यं निराकर्तुम्॥

कथं तर्हि श्रुतिलिङ्गादिषु पूर्वपूर्वेणोत्तरोत्तरस्य बाधः? तत्रापि हि श्रुतिद्वयसंभवान्न क्लृप्तया कल्प्यानिराकरणं कर्तुं शक्यते॥

---

'वैदिकैः स्मर्यमाणत्वात्' इत्यादिपूर्वाधिकरणसिद्धान्तहेतुभिः सर्ववेष्टनादिस्मृतीनां वेदमूलत्वात्प्रामाण्यमिति पूर्वपक्ष इत्यर्थः। वह्नौ शैत्यानुमानस्य तदौष्ण्यग्राहिप्रत्यक्षेणेव सर्ववेष्टनश्रुत्यनुमानस्य स्पर्शनश्रुतिग्राहिप्रत्यक्षेण विरोधादनुत्थानमाशङ्क्य निराकरोति— **न चेति**। श्रुतिग्राहिप्रत्यक्षविरोधादिति वक्तव्ये प्रत्यक्षश्रुतिविरोधादित्युक्तिः, प्रत्यक्षानुमानविषयश्रुत्योरौष्ण्यशैत्ययोरिव न वस्तुस्वभावकृतो विरोधः, अर्थानुसंधानाभावे सर्वशब्दस्योद्गातृस्प्रष्टव्यावयवातिरिक्तावयवकात्स्न्र्यविषयत्वेन वा तयोः श्रुत्योर्विरोधास्फूर्तेः। अतः श्रुतिद्वयविरोधाविरोधयोरर्थविरोधाविरोधाधीनत्वात्तादर्थ्येन तदर्थद्वयविरोधोऽप्यत्र चिन्तनीय इति ज्ञापनार्था। औष्ण्यशैत्यवदुभयासंभवे हि विरोधः, सोऽत्र नास्तीति वैषम्येण परिहरति— **श्रुतिद्वयेति**। एतदेवोपपादयति— **व्रीहियवादीत्यादिना**॥

ननु श्रुतिद्वयस्यौष्ण्यशैत्यवत्स्वाभाविकविरोधाभावेऽप्यर्थद्वारकविरोधोऽस्तीत्याशङ्का[1]मुद्धाव्य प्रागुपात्तव्रीहियवादिदृष्टान्तविवरणेनापाकरोति— **संभवति चेति**। दर्शपूर्णमासयोः 'व्रीहिभिर्यजेत, यवैर्यजेत' इति व्रीहीणां यवानां च नैरपेक्ष्येण यागसाधनत्वबोधकश्रुतिद्वयवत् ज्योतिष्टोमे 'बृहत्पृष्ठं भवति, रथन्तरं पृष्ठं भवति' इति पृष्ठाख्यस्तोत्रसाधनत्वबोधकश्रुतिद्वयवत्, 'अतिरात्रे षोडशिनं गृह्णाति, न गृह्णाति' इति षोडशिग्रहणविधिनिषेधश्रुतिद्वयवच्च युगपदशक्यानुष्ठानार्थमपि स्पर्शनसर्ववेष्टनश्रुतिद्वयं संभवतीति नैकविषयप्रत्यक्षेणेतरविषयमनुमानं निरोद्धुं शक्यमित्यर्थः। परस्परविरुद्धार्थयोरपि श्रुत्योः संभवे श्रुतिलिङ्गादिषु पूर्वपूर्वेणोत्तरोत्तरस्य बाधो न स्यात्। ऐन्द्र्या ऋचो गार्हपत्ये विनियोजक[2]श्रुतिसत्त्वेऽपीन्द्रप्रकाशनसामर्थ्यरूपाल्लिङ्गादिन्द्रेऽपि विनियोजकश्रुतिकल्पनसंभवादित्याशङ्कते— **कथं तर्हीति**। तत्र सर्ववेष्टनश्रुत्यनुमान इव बलवद्विरोधि[3]प्रमाणकृतप्रमेयापहाराद्बाधो नोच्यते। किं तु कल्पकसामग्र्यभावात्कल्पनमेव न प्रवर्तते इत्येवंरूपो

---

अ. 1. उत्थाप्य 2. क. प्रत्यक्षश्रुतिसत्त्वेऽपि 3. म. प्रमाणकप्रमेयापहारात्

उच्यते-- नैव तत्र प्रमेयापहारनिबन्धनो बाधः, किं तु कल्पनामूलोच्छेदात् । यावद्धि मन्त्राम्नानमनवगतप्रयोजनं प्रकरणी चाकृतार्थस्तावदेव तत्सिद्ध्यर्थं श्रुतिकल्पनं प्रमाणवत् । यदा तु कल्प्यया द्वयोरपि नैराकाङ्क्ष्यं तदा मूलोच्छेदादाकाङ्क्षाधीना श्रुतिकल्पना नैवोन्मज्जति । अत्र तु प्रत्यक्षश्रुत्या न स्मृतेर्मूलाकाङ्क्षा निवर्त्यते । यतो मूलोच्छेदादनुमानविरोधः स्यात् , यदि परं प्रमेयापहारादग्नाविव शैत्यानुमानं प्रत्यक्षेण बाध्येत । न चैवं संभवति, श्रुतिद्वयसंभवात् । अग्नेर्हि शैत्यौष्ण्ये न संभवतः, परस्परोपमर्दकत्वात्तयोः । अत. प्रत्यक्षेणौष्ण्येन शैत्यस्यापहृतत्वान्न तद्विषयमनुमानमुदेतुमुत्सहते । अत्र च संभवति श्रुतिद्वयं व्रीहियवादिवदित्युक्तम् । अथ वा श्रुतिद्वयप्रमेये न मिथो विरुद्धे; न हि व्रीहिशक्त्या यवशक्तिर्बाध्यते, सा वा तया; स्पर्शनशक्त्या वा वेष्टनशक्तिः; सा वा तया । शक्तिमात्रं हि विधेः प्रमेयम्; अतोऽत्रानुमानस्य प्रत्यक्षेणाविरोधाद्विरुद्धानामपि प्रामाण्यमिति प्राप्तेऽभिधीयते ॥

अप्रामाण्यं विरुद्धानामशक्यार्थविधानतः ।
औदुम्बरीं न शक्नोति सर्वां वेष्टयितुं स्पृशन् ॥

---

बाध उच्यत इति वैषम्येण परिहरति— नैव तत्रेति । कल्पकसामग्र्यभावमुपपादयति— यावद्धीति । अग्निप्रकरणे 'कदाचन स्तरीरसि' इति मन्त्र आम्नायते । स मन्त्रस्तत्प्रकरणाम्नानसाफल्यार्थं स्वजन्यं प्रकरण्युपकारमपेक्षते । प्रकरणे च तं मन्त्रमितिकर्तव्यतारूपेण गृह्णन् तज्जन्यं स्वस्य कंचिदुपकारमपेक्षते । स यद्यन्यतोऽनवगतः स्यात्तदा लिङ्गेन तद्विषयश्रुतिकल्पनं प्रवर्तते । इह तु 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति श्रुतिप्राप्तमुपकारमासाद्य मन्त्रप्रकरणिनोर्द्वयोरप्याकाङ्क्षाशान्तेराकाङ्क्षाधीना विनियोजकश्रुतिकल्पना न प्रवर्तते । प्रकृते तु प्रत्यक्षाऽपि स्पर्शनश्रुतिः सर्ववेष्टनश्रुतेर्मूलाकाङ्क्षां न निवर्तयतीति सामग्र्यभावादनुमानाप्रवृत्तिर्न शक्यशङ्का । किं तु सा प्रत्यक्षेण बाधाच्छङ्कनीया । साऽपि शङ्काऽत्र न प्रवर्तते । श्रुतिद्वयसंभवोपपादनेन वह्निशैत्यानुमानवैषम्यस्य दर्शितत्वादित्यर्थः । एवं स्पर्शनसर्ववेष्टनश्रुत्यर्थयोर्विरोधमभ्युपेत्य सत्यप्यर्थविरोधे व्रीहियवश्रुतिद्वयवत् स्पर्शनवेष्टनश्रुतिद्वयसंभवान्नैवानुमानमितरप्रत्यक्षेण बाध्यमित्युक्तम् । इदानीमर्थविरोधोऽपि नास्तीत्याह— अथ वेति । सर्वत्र शक्तिमात्रं विध्यर्थः । न च शक्त्योः परस्परविरोधोऽस्ति । व्रीहीणां पुरोडाशनिर्वर्तनसामर्थ्येन यवानां च तत्सामर्थ्यस्यापनेतुमशक्यत्वात् । अनुष्ठाने परं विरोधः । व्रीहिभिर्निर्वर्त्यस्य पुरोडाशस्य यवैर्निर्वर्तयितुमशक्यत्वात् । तथैवात्राप्यनुष्ठाने विरोधोऽस्तु नाम, अर्थविरोधाभावादप्रतिहतमनुमानमित्यर्थः । अर्थविरोधोपपादनपूर्वकं सर्ववेष्टनश्रुत्यनुमानस्य अग्निशैत्यानुमानसाम्यं

वेष्टितां वाऽपि संस्प्रष्टुमतोऽन्योन्यविरोधतः ।
प्रमेयापहृतेरेव बाधः स्यादग्निशैत्यवत् ॥

अशक्यार्थविषयता हि मूर्धाभिषिक्तमप्रामाण्ये निदानं विधीनाम्, सागरं तरेदित्यादेवत् । अशक्यं च स्पृशता वेष्टयितुं वेष्टयता स्प्रष्टुं वा । अतो वेष्टयेत् स्पृशेदित्यशक्यार्थविधानान्न तावदुभयोरपि प्रामाण्यं संभवतीत्यवश्यमन्यतरद्बाधितव्यम् ॥

ननु शक्तिमात्रं विधेः प्रमेयम्, संभवति चाननुष्ठीयमानयोरपि शक्तिरिति सत्यप्यनुष्ठानविरोधे प्रमेयभूतशक्त्यविरोधादुभयोः प्रामाण्यमुपपन्नमिति नैकस्यापि बाधो युज्यते । तत्किमिदानीं सागरं तरेदग्निना सिञ्चेदित्यादीनामप्युपपन्नं प्रामाण्यम्? अननुष्ठीयमानस्यापि शक्तिसद्भावात् । तथा सामान्यविशेषशास्त्रयोरविरोधः स्यात्, आहवनीयपदयोरपि शक्तिसंभवात् । अतश्चाहवनीयस्य न पदेन बाधः स्यात्, अविरुद्धस्य दुर्बलस्यापि बाधायोगात् ॥

न च श्रुत्यादिभिरिव लिङ्गादीनां मूलोच्छेदेन श्रुतिकल्पनाविरोधाद्बाधसंभवः,

---

[1]वदन् सिद्धान्तयति— **अप्रामाण्यमिति** । श्लोकौ व्याचष्टे— **अशक्यार्थेति** । व्रीहियवश्रुत्योस्तु प्रत्यक्षत्वान्नैकयेतरबाधनं कर्तुं शक्यमिति व्रीहियवश्रुतिद्वयवैषम्यमग्रे वक्ष्यते । शक्तिमात्रं विध्यर्थ इत्यविरोधशङ्कामुत्थापयति— **नन्विति** । दूषयति— **किमिदानीमिति** । नन्वननुष्ठीयमाने सर्वत्र शक्तिर्नाभ्युपगम्यते; किं त्वनुष्ठातुं शक्यं; अतो नोक्तदोष इत्याशङ्क्य दूषणान्तरमाह— **तथेति** । 'आहवनीये जुहोति' इत्यनारभ्य प्रवृत्तं शास्त्रं प्रत्यक्षश्रुतिसिद्धसकलहोमानुवादेनाहवनीयमधिकरणं विदधत् सामान्यशास्त्रम् । 'पदे जुहोति' इति सोमगतहोमस्य विशेषस्य सोमक्रयण्याः[2] पदमधिकरणं विदधद्विशेषशास्त्रम् । तत्र विशेषशास्त्रेण सामान्यशास्त्रस्य संकोचरूपो बाधो न स्यात् । पदहोमेऽप्याहवनीयस्याधिकरणकारकत्वयोग्यतासत्त्वादित्यर्थः । ननु अविरोधेऽपि विशेषविषयत्वेन शीघ्रप्रवृत्तिकं प्रबलम् । सामान्यशास्त्रं तु होमसामान्यद्वारा सर्वेषु होमविशेषेषु विलम्बेन प्रवर्तमानं पदहोमेऽपि मन्दप्रवृत्तिकम् । अतः शीघ्रप्रवृत्तिकेन मन्दप्रवृत्तिकं बाध्यमित्याशङ्क्याह— **अविरुद्धस्येति** । न हि प्रबलमित्येवाविरोधेऽपि दुर्बलस्य बाधकम्; अतिप्रसङ्गादित्यर्थः । ननु श्रुतिलिङ्गादिषु शीघ्रप्रवृत्तिकेन पूर्वपूर्वेणोत्तरस्येव सामान्यशास्त्रस्य विशेषशास्त्रेण बाधोऽस्तु; मा भूत्प्रमेयापहारेण बाधः । अतः शक्तिमात्रं विधिप्रमेयमित्येतदनुपपन्नमित्याशङ्क्याह— **न च श्रुत्यादिभिरिवेति** । श्रुत्यादिषु पूर्वपूर्वेणोत्तरोत्तरस्य बाधो नाम उत्तरोत्तरकल्प्यतत्तद्विनियोजकप्रमाणकल्पना-

---

1. अ. दर्शयन् 2. सोमक्रयण्यां

सामान्यशास्त्रस्यापि प्रत्यक्षत्वात् तन्मात्रेण होमान्तरेष्विव पदहोमेऽप्याहवनीयसिद्धेः। अतोऽत्र सामग्रीविरोधासंभवात् प्रमेयविरोधादेव बाधोऽङ्गीकर्तव्यः। शक्तिमात्रे च प्रमेये तद्विशेषाभावान्न विरोधः सिध्येत्। एवमुत्पत्त्युत्पन्नशिष्टनित्यनैमित्तिकादिषु प्रसङ्गो दर्शयितव्यः। तस्मादवश्यमनुष्ठानविरोधे शास्त्रविरोधोऽङ्गीकर्तव्यः। किं च न शक्तिमात्रं भूतार्थकथनवद्विधिना बोध्यते। प्रवर्तनारूपो हि विधिरर्थात्समीहितसाधनशक्तिं बोधयति। प्रवर्तना चाशक्यविषया न संभवतीति स्यादेवाप्रामाण्यम्; यदाऽपि समीहितसाधनतैव विध्यर्थ इत्याश्रीयते, तदाऽपि न तन्मात्रं विधिः; किं तु कर्तुः समीहितसाधनता। न चाशक्यार्थे कर्तृत्वं संभवतीत्यप्रामाण्यम्। यथोक्तम्— 'आख्यातानामर्थं ब्रुवतां शक्तिः

---

प्रतिबन्धः। न चेह तथाभूतो बाधो वक्तुं शक्यः; सामान्यशास्त्रस्यापि प्रत्यक्षत्वेनाकल्प्यत्वात् प्रत्यक्षत्वमात्रेण होमान्तरेष्विव पदहोमेऽपि प्रवृत्तेः प्रमेयविरोधापरामर्शे निवारयितुमशक्यत्वात्। ततश्चावश्यं प्रमेयविरोध आश्रेयः। शक्तिमात्र विध्यर्थे इति वस्तुतस्तु नास्ति प्रमेयापहार इति तत्र बाध्यबाधकभावो न सिध्येदित्यर्थः। **एवमिति।** 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा' इति [1]वाक्येन शिष्टमामिक्षाद्रव्यमुत्पत्तिशिष्टम्, 'वाजिभ्यो वाजिनम्' इत्यामिक्षाद्रव्यकत्वेनोत्पन्ने यागे पश्चाच्छ्रुतं वाजिनमुत्पन्नशिष्टम्। तथा दर्शपूर्णमासयोः 'पञ्चदश सामिधेनीरनुब्रूयात्' इति सामिधेनीपाञ्चदश्यं नित्यम्; 'सप्तदशानुब्रूयाद्वैश्यस्य' इति वैश्यनिमित्ते श्रुतं तत्साप्तदश्यं नैमित्तिकम्। अत्रोत्पत्तिशिष्टेनोत्पन्नशिष्टस्येव नैमित्तिकेन नित्यस्य च बाधो न स्यात्। शक्तिमात्रस्य विध्यर्थत्वे अर्थविरोधाभावादित्यर्थः। आदिशब्देन नित्यकाम्यसावकाशनिरवकाशादीनां बाध्यबाधकत्वाभिमतानां संग्रहः। ननु अर्थविरोधाभावेऽप्यनुष्ठानविरोधादेव बाध्यबाधकभाव इत्याशङ्क्याह— **तस्मादिति।** विध्यर्थयोरविरोधे तदनुष्ठानविरोधोऽपि न स्यादिति अनुष्ठानविरोधादेव विध्यर्थविरोधोऽप्यङ्गीक्रियत[2] इति भावः। ननु अन्यद्विधिप्रमेयम्; अन्यत्तद्विषयमनुष्ठानम्; अतस्तयोर्भेदात् विध्यर्थाविरोधेऽप्यनुष्ठानविरोधो नानुपपन्न इति शङ्कानिराकरोति— **किं चेति।** विधिवाक्यमिदमत्र शक्तमिति सिद्धार्थमात्रकथनपरं न भवति। पुरुषप्रवर्तनारूपशब्दभावनाव्यापारवाचित्वात् पुरुषान् प्रवर्तयन् विधिरपुरुषार्थे प्रवर्तयितुमशक्नुवन् समीहितसाधनतांशमपि बोधयतीत्येतावत्। न तावता तन्मात्रे विधेः पर्यवसानमित्यर्थः। ननु येषां समीहितसाधनता विध्यर्थः, येषां वा सैव प्रवर्तनारूपा शब्दभावना तन्मते समीहितसाधनतांशमात्रे विधिः पर्यवसानं स्यादित्याशङ्क्याह— **यदेति।** तन्मतेऽप्यनुष्ठातुः समीहितसाधनता विध्यर्थः, अन्यथा अन्यकृतेनापि यागादिना पाचककृतेन पाकेन राज्ञ इवान्यस्यापि समीहितसिद्धिप्रसङ्गात्। अतोऽनुष्ठानविरोधो विध्यर्थविरोधपर्यवसायी, अनुष्ठातृगतत्वाद्विध्यर्थस्य यथैः। अस्तु प्रकृते किमायातमित्याशङ्क्याह—

---

1. वाक्यशिष्टं 2. अङ्गीकर्तव्य इति भावः

क्रमोदिताभ्यामिव पुष्पवद्भ्यां
दिग्वासवी सा शुशुभे सुताभ्याम् ॥ ७९ ॥

चित्राङ्गदेनेति । वसोरपत्यं स्त्री वासवी । 'तस्यापत्यम्' इत्यण् । 'टिड्ढाणञ्...' इति ङीप् । सा काली आहृतसंभवेन आर्जितजन्मना पूज्यजन्मनेत्यर्थः । 'आदृतौ सादरार्चितौ' इत्यमरः । चित्राङ्गदेन चित्राङ्गदनाम्ना यवीयसा कनीयसा विचित्रवीर्येण विचित्रवीर्यनाम्ना च सुताभ्यां क्रमेण पर्यायेण उदिताभ्यां उद्गताभ्यां पुष्पवद्भ्यां सूर्यचन्द्राभ्याम् । 'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ' इत्यमरः । वासवी ऐन्द्री दिगिव शुशुभे रराज ॥ ७९ ॥

ततो [1]विधिर्विस्रसयोपगूढं
नरेन्द्रमारोपयाति स्म नाकम् ।
भीष्मोऽपि शस्त्रास्त्रविदं कुमारं
चित्राङ्गदं पौरवराज्यपीठम् ॥ ८० ॥

तत इति । ततः अनन्तरं विधिर्दैवम् । 'विधिर्विधाने दैवे' इत्यमरः । विस्रसया जरया पलितम् । 'विस्रसा जरा' इत्यमरः । उपगूढमालिङ्गितम्; जराक्रान्तमित्यर्थः । नरेन्द्रं शंतनुम् । नाकं स्वर्गम् । 'स्वरव्ययं स्वर्गनाक...' इत्यमरः । आरोपयति स्म प्रापयत्; राजा तु मृत इत्यर्थः । 'ण्यन्ते कर्तुश्च कर्मणः' इति द्विकर्मकत्वम् । रुहेः ण्यन्तस्य लटि 'रुहः पोऽन्यतरस्याम्' इति हकारस्य पकारः । भीष्मोऽपि शस्त्रास्त्रविदं कुमारं चित्राङ्गदं पौरवराज्यपीठं सिंहासनं आरोपयति स्म । चित्राङ्गदं राजानं चकारेत्यर्थः ॥ ८० ॥

स पौरवः सागरमेखलां गा-
मवन्नवज्ञातसमस्तशूरः ।
असंनिधौ सिन्धुभुवः स्वनाम्ना[2]
[3]गन्धर्ववर्येण रणे निजघ्ने ॥ ८१ ॥

---

1. विधाता जरयोपगूढं 2. सनाम्ना 3. गन्धर्ववीरेण

स इति । अवज्ञातसमस्तशूरः तिरस्कृतसमस्तवीरः । स पौरवः चित्राङ्गदः । सागरः समुद्र एव मेखला रशना यस्याः सा तां समुद्रमेखलां गां भूमिम् । 'भूमिवाग्रश्मिवज्रेषु पशुदृक्स्वर्गवारिषु । एष्वर्थेषु च मेधावी गोशब्दमुपलक्षयेत् ॥' इति उणादिवृत्तिकारः । अवन् रक्षन् अवतेर्लटि शत्रादेशः । पुनर्लट्ग्रहणात् प्रथमासामानाधिकरण्येऽपि शतृप्रत्ययः । सिन्धुभुवो भीष्मस्य असंनिधौ असामीप्ये ; भीष्मे असमीपवर्तिनि सतीत्यर्थः । स्वस्य आत्मनो नाम चित्राङ्गद इति नामधेयं यस्य तेन । सनाम्नेति पाठे समानं नाम चित्राङ्गद इत्यभिधानं यस्य तेन । 'ज्योतिर्जनपद...' इत्यादिना समानस्य सभावः । चित्राङ्गदनाम्ना गन्धर्ववर्येण गन्धर्वश्रेष्ठेन रणे युद्धे निजघ्ने निहतः । हन्तेः कर्मणि लिट् ॥ ८१ ॥

सुते हते ज्यायसि सत्यवत्याः
शुचं ज्वलन्तीं हृदि जाह्नवेयः ।
यवीयसो राज्यनिवेशितस्य
शान्तामकार्षीदभिषेकतोयैः ॥ ८२ ॥

सुत इति । जाह्नवेयः भीष्मः । 'स्त्रीभ्यो ढक्' । ज्यायसि ज्येष्ठे । 'वृद्धस्य च' इति ज्यादेशः । सुते हते सति सत्यवत्या दाशकन्याया हृदि हृदये ज्वलन्तीं दीप्यमानां शुचं शोकं । राज्यनिवेशितस्य राज्ये स्थापितस्य यवीयसो विचित्रवीर्यस्य अभिषेकतोयैः अभिषेकोदकैः शान्तामकार्षीत् कृतवान् । करोतेर्लुङ् । लोके ह्यग्निरुदकैः शाम्यति ॥ ८२ ॥

कन्यास्ततः काशिपतेः स तिस्रः
पतिंवरा वीरवराग्रगण्यः ।
भ्रातुः कृते हर्तुमना रथेन
वाराणसीं कार्मुकवानयासीत् ॥ ८३ ॥

कन्या इति । ततोऽनन्तरं वीरवराग्रगण्यः वीरश्रेष्ठाग्रणीः स भीष्मः काश्या वाराणस्याः पतिः प्रभुः काशिपतिः । 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति काशि इति ह्रस्वः । यथाऽऽह कालिदासः(?) अथवा, काशयो देशविशेषाः तेषां पतिः, तस्य काशिराजस्य संबन्धिनीः पतिंवराः स्वयंवराः । 'सं-

ज्ञायां भृतॄवृजि . ' इत्यादिना खच्प्रत्ययः। 'अरुर्द्विषत्...' इत्यादिना मुम्। 'अथ स्वयंवरा। पतिंवरा च वर्याऽथ ' इत्यमरः । तिस्रः कन्याः कुमारीः । भ्रातुः कृते विचित्रवीर्यार्थमित्यर्थः । कृते इत्येतत्तादर्थ्येऽव्ययम् । हर्तुं मनो यस्य स तथोक्तः । 'तुं काममनसोरपि ' इति मकारलोपः । कार्मुकवान् धनुर्धरः सन् रथेन स्यन्दनेन साधनेन वाराणसीं काशीं अयासीत् ययौ ॥ ८३ ॥

प्रत्युद्गतस्तत्र तरङ्गवातै-
रध्वश्रमच्छेदिभिरभ्रसिन्धोः ।
ददर्श मञ्चेषु नृपान्निषण्णान्
शृङ्गेषु मेरोरिव सिन्धुरेन्द्रान् ॥ ८४ ॥

प्रत्युद्गत इति । तत्र वाराणस्यां अध्वश्रमच्छेदिभिः मार्गायासनिवारकैः अभ्रसिन्धोर्गङ्गायास्तरङ्गवातैः ऊर्मिवायुभिः प्रत्युद्गतः स भीष्मो मञ्चेषु चतुस्तम्भरूपेषु पर्यङ्केषु निषण्णान् आसीनान् नृपान् । मेरोर्हेमाद्रेः शृङ्गेषु शिखरेषु निषण्णान् सिन्धुरेन्द्रान् गजश्रेष्ठानिव ददर्श दृष्टवान ॥

तं प्राप्तमञ्चं वितथप्रतिज्ञः
सुरस्रवन्तीसुत एष वृद्धः ।
किमर्थमायात इति ब्रुवाणाः
सहस्ततालं जहसुर्नरेन्द्राः ॥ ८५ ॥

तमिति । प्राप्तमञ्चं आरूढमञ्चं तं भीष्मं वृद्धो वर्षीयानेषः सुरस्रवन्तीसुतः गङ्गासुतः वितथप्रतिज्ञः व्यर्थसन्धः सन् किमर्थमायातः आगतवान् इति ब्रुवाणाः ब्रुवन्तो नरेन्द्राः राजानः हस्ततालैः करास्फालनैः सह वर्तनं यस्मिन् कर्मणि तद्यथा भवति तथा । 'क्रियाविशेषणानां कर्मत्वमेकत्वं नपुंसकत्वं च वक्तव्यम् ' इति नपुंसकत्वम् । जहसुः हसितवन्तः । ' तालः कालक्रियामाने करास्फालने ' इति रत्नमालायाम् ॥ ८५ ॥

बहूनथार्तैः कथितापदाना-
ननिच्छया राजसुताः समालाः ।

समीरगत्येव पयोदरेखाः
सविद्युतः क्षोणिभृतो व्यतीयुः ॥ ८६ ॥

बहूनिति । अथानन्तरं मालाभिः वरणस्रग्भिः सहिताः समाला राजसुताः राजकन्याः कर्त्र्यः । आप्तैः बन्धुभिः कथितापदानान् वर्णितकर्मवृत्तान् । 'अपदानं कर्मवृत्तम्' इत्यमरः । बहून् अनेकान् क्षोणिभृतः भूपालान् अनिच्छया इच्छाराहित्येन हेतुना विद्युद्भिः तटिद्भिः सहिताः सविद्युतः पयोदरेखाः मेघपङ्क्तयः समीरगत्या वायुवशेन क्षोणिभृतः पर्वतानिव व्यतीयुः अत्ययुः । 'भूभृद्भूमिधरो नृपः' इत्युक्तत्वात् क्षोणिभृच्छब्दो बह्वर्थवाची ॥ ८६ ॥

आत्मानमालोक्य जरासमेत-
मन्यत्र यान्तीर्द्रुतमीर्ष्ययेव ।
कुरूद्वहस्ता मिषतां नृपाणा-
मारोप्य यानं निरगान्नगर्याः ॥ ८७ ॥

आत्मानमिति । उद्वहतीत्युद्वहः ; पचाद्यच् । कुरूणामुद्वहः कुरूद्वहः भीष्मः । आत्मानं स्वं जरासमेतं वयोहानियुक्तमालोक्य अन्यत्र अन्यस्मिन् स्थले । ईर्ष्यया असूययेव द्रुतं शीघ्रं यान्तीः गच्छन्तीः । 'आच्छीनद्योर्नुम्' इति नुम् । ता राजकन्याः यानं रथमारोप्य प्रापय्य नृपाणां राज्ञां मिषतां पश्यतां ; पश्यतो राज्ञ अनादृत्येत्यर्थः । 'षष्ठी चानादरे' इति षष्ठी । नगर्याः काशीनगरात् निरगात् निर्गतवान् ॥ ८७ ॥

युयुत्सया वर्त्म निरुन्धतस्ता-
न्निर्जित्य साल्वप्रमुखान् स भल्लैः ।
स्वयं वृतः संयति वीरलक्ष्म्या
पुरं प्रपेदे स हि कन्यकाभिः ॥ ८८ ॥

युयुत्सयेति । स भीष्मः युयुत्सया योद्धुमिच्छया । युधेः सन्नन्तात् 'अ प्रत्ययात्' इत्यप्रत्ययः । वर्त्म मार्गं निरुन्धतः आवृण्वतः । साल्वप्रमुखान् साल्वो नाम कश्चिद्राजा । साल्व एव

प्रमुखः प्रभृतिर्येषां ते साल्वप्रमुखाः तान् नृपान् । भल्लैः शरविशेषैः निर्जित्य संयति युद्धे वीरलक्ष्म्या जयश्रिया स्वयं वृतः सन् कन्यकाभिः सह पुरं हास्तिननगरं प्रपेदे प्राप्तवान् ॥ ८८ ॥

**निशम्य साल्वे रतिभाजमम्बां**
**प्रस्थापयामास तदन्तिकं ताम् ।**
**ततोऽम्बिकाम्बालिकयोः स पाणि-**
**मग्राहयद्भ्रातरमापगेयः ॥ ८९ ॥**

निशम्येति । आपगेयो गाङ्गेयः भीष्मः । 'स्त्रीभ्यो ढक्' इति ढक् । अम्बां अम्बाख्यां कन्यां साल्वे राज्ञि रतिभाजं प्रीतिमतीं निशम्य श्रुत्वा । 'निशम्यतीह श्रवणे तथा निशमयत्यपि' इति भट्टमल्लः । निशम्यतेरिदं रूपम्; अन्यथा निशमय्येति स्यात् । अत एवोक्तं वामनेन— 'निशम्य-निशमय्यशब्दौ प्रकृतिभेदात्' इति । तामम्बां तदन्तिकं साल्वसमीपं प्रस्थापयामास प्रस्थापितवान् । तिष्ठतेर्लिटि आम्प्रत्यये अस्तेरनुप्रयोगः । ततोऽनन्तरं स भीष्मः अम्बिकाम्बालिकयोः काशिराजदुहित्रोः पाणिं हस्तम् । एकैकाभिप्रायेणैकवचनम् । द्वयोः पाणी इत्यर्थः । तथा च कालिदासः— 'पश्चात्पार्थिवकन्यानां पाणिमग्राहयत्पिता' इति । भ्रातरं विचित्रवीर्यं अग्राहयत् ग्राहितवान् पाणिपीडनं कारितवानित्यर्थः । ग्रहेः उपादानार्थत्वात् उपादानस्य च गत्यर्थत्वे कथंचित् पर्यवसानात् 'गतिबुद्धि...' इत्यादिना कर्मत्वम् । कालिदासश्च ग्रहिं ण्यन्तं द्विकर्मकमेव प्रयुक्तवान्— 'अयाचितारं न हि देवमद्रिः सुतां ग्राहयितुं शशाक' इति । भर्तृका तथा चोक्त ण्ये प्रयोगः (?)— 'अजीगृहत्तज्जनकोपनस्तत्' इति । 'संन्यस्तशस्त्रादपि बलाद्धतुम्ग्र ह्यसि' इति मुरारिः ॥ ८९ ॥

**साल्वेन सा शत्रुहृतेत्यपास्ता**
**गाङ्गेयमासाद्य पतिं ययाचे ।**
**निराकृता तेन दृढव्रतेन**
**ययावरण्यं तपसे विषण्णा ॥ ९० ॥**

साल्वेनेति । सा अम्बा साल्वेन शत्रुहृता शत्रुणा हृता बन्दीकृतेत्यपास्ता त्यक्ता सती । गङ्गाया अपत्यं पुमान् गाङ्गेयः । 'शुभ्रादिभ्यश्च' इति ढक् । तं भीष्मं आसाद्य पतिं ययाचे भर्तारं याचितवती । दृढव्रतेन सत्यप्रतिज्ञेन तेन भीष्मेण निराकृता निरस्ता विषण्णा दुःखिता सती तपसे तपः कर्म कर्तुम् । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी । अरण्यं वनं ययौ ॥ ९० ॥

तदनु विधिबलेन राजयक्ष्मा
व्यसनिनमभ्यधिकं विचित्रवीर्यम् ।
प्रतिदिनमुपजायमानशोषं
व्यधित गिरेरिव निर्झरं निदाघः ॥ ९१ ॥

तदन्विति । तदनु तदनन्तरं विधिबलेन दैवबलेन राज्ञः चन्द्रस्य यक्ष्मा राजयक्ष्मा राजा वा यक्ष्मा राजयक्ष्मा क्षयरोगः । यथाऽऽह वाग्भटः— 'अनेकरोगानुगतो बहुरोगपुरोगमः । राजयक्ष्मा क्षयः शोषो रोगराडिति च स्मृतः ॥' इति । अभ्यधिकं अत्यन्तं व्यसनिनं रत्यादिव्यसनयुक्तं विचित्रवीर्यं निदाघो ग्रीष्मर्तुः । 'निदाघ उष्णोपगमः' इत्यमरः । गिरेः शैलस्य संबन्धिनं निर्झरं प्रवाहमिव । 'प्रवाहो निर्झरो झरः' इत्यमरः । प्रतिदिनं दिने दिने; वीप्सायां चाव्ययीभावः । उपजायमानशोषं उदयमानशोषं, अन्यत्र उद्भवज्जलशोषं व्यधित विहितवान् । राजयक्ष्मणा हि प्रत्यहमङ्गशोषो भवतीति प्रसिद्धिः । व्यधितेति विपूर्वात् दधातेर्लुङि तङि 'स्थाघ्वोरिच्च' इति किदिकारादेशौ । 'ह्रस्वादङ्गात्' इति सिचो लोपः । पुष्पिताग्रमेतत् , 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात् ॥ ९१ ॥

तेनोन्मदेन करिणेव गदेन तस्मि-
न्नावासवृक्ष इव राजनि हन्त भग्ने ।
अन्यं न किंचिदवलम्बनमाप्नुवन्तः
शोकाकुलाश्च कुरवः शकुना इवासन् ॥ ९२ ॥

इत्यगस्त्यपण्डितकृतौ बालभारते महाकाव्ये
आदिपर्वणि प्रथमः सर्गः ॥

तेनेति । तेन पूर्वोक्तेन गदेन रोगेण राजयक्ष्मणा । 'गदो रोगहरिभ्रात्रोः' इति रत्नमालायाम् । उन्मदेन मदयुक्तेन करिणा गजेनेव तस्मिन् राजनि विचित्रवीर्ये । आवासवृक्षे आश्रयद्रुम इव भग्ने वृक्णे सति । भञ्जेः 'ओदितश्च' इति निष्ठानत्वम् । हन्तेति खेदे । अन्यदपरं किंचिदवलम्बनं आधारं नाप्नुवन्तः न गच्छन्तः । महाविभाषया नञ्समासाभावः । कुरूणां निवासः कुरवो जनपदाः 'तस्य निवासः' इत्यण् । जनपदे लुप् । शकुनाः पक्षिण इव 'शकुन्तपक्षिशकुन...' इत्यमरः । शोकाकुला दुःखविह्वलाश्च आसन् अभूवन् । यथा हस्तिना वृक्षे भग्ने सति तदाश्रिताः पक्षिणो

दुःखिता भवन्ति तद्वद्विचित्रवीर्ये मृते सति कुरवोऽपि दुःखिता इत्यर्थः । अनेकोपमेयम् । यदुक्तं दण्डिना— 'एकानेकवशब्दत्वात्सा वाक्यार्थोपमा द्विधा' इति । आसन्निति अस्तेर्लङ् । झेरन्तादेशः । वसन्ततिलकमेतत्, 'उक्ता वसन्ततिलका तभजा जगौ गः' इति लक्षणात् । सर्गान्तत्वाद्वृत्तभेदः । यदाह दण्डी— 'सर्गैरनतिविस्तीर्णैः सद्रसैस्तैः सुगन्धिभिः । सर्वत्र भिन्नसर्गान्तैरुपेतं लोकरञ्जकम्' इति ॥ ९२ ॥

अथ कविः काव्यवर्णनीयाख्यानपूर्वकं सर्गसमाप्तिं कथयति— इति-शब्दः परिसमाप्तौ । अगस्त्यकृताविति कविनामकथनम् । महाकाव्ये महच्छब्देन लक्षणसंपत्तिः । बालभारते इति काव्यवर्ण्यकथनम् । प्रथमः सर्गः समाप्त इति शेषः । एवमुत्तरत्रापि द्रष्टव्यम् ॥

इति श्रीमद्राजाधिराज राजपरमेश्वरकर्णाटेश्वर श्रीकृष्णरायसार्वभौमशिरःप्रधानसकलागमपारावारपारीण श्रीसाल्वतिम्मयदण्डनाथविरचितायां मनोहराख्यायां बालभारतव्याख्यायां

प्रथमः सर्गः ॥





## ॥ द्वितीयः सर्गः ॥

अथ क्षितीशस्य यथाविधि द्विजै-
निर्वर्तिते कर्मणि पारलौकिके ।
सरित्सुतं वीक्ष्य समीपवर्तिनं
समाददे योजनगन्धया वचः ॥ १ ॥

अथेति । अथानन्तरं द्विजैः विप्रैः पुरोहितैरित्यर्थः । 'दन्तविप्राण्डजा द्विजाः' इत्यमरः । क्षितीशस्य राज्ञो विचित्रवीर्यस्य परलोके भवं पारलौकिकम् । अध्यात्मादिपाठात् ठञ् । तत्र हि इहलोकपरलोकेति पठ्यते । 'अनुशतिकादीनां च' इत्युभयपदवृद्धिः । तत्र हि लोकोत्तरपदस्येति पठ्यते । तस्मिन् कर्मणि श्राद्धादौ यथ विधि शास्त्रोक्तप्रकारेण निर्वर्तिते समापिते सति योजनगन्धया व्यासमात्रा । 'योजनगन्धा सीता कस्तूरी व्यासमाता च' इति रत्नमालायाम् । समीपवर्तिनमन्तिकस्थं सरित्सुतं गाङ्गेयं वीक्ष्य वच आददे आत्तम्; उक्तमित्यर्थः । कर्मणि लिट् ॥

गते तव भ्रातरि वत्स पञ्चतां
चिराय नश्चान्द्रमसं कुलं महत् ।
अदृष्टसंतानतया न शोभते
वनं हरेः प्राङ्मथनादिवोदधेः ॥ २ ॥

गत इति । हे वत्स हे पुत्र तव भ्रातरि विचित्रवीर्ये पञ्चतां कालधर्मं मरणमित्यर्थः । 'स्यात्पञ्चता कालधर्मः' इत्यमरः । गते प्राप्ते सति नः अस्माकम् 'अस्मदो द्वयोश्च' इति द्वयोरेकस्मिन् वा बहुवचनम् । चन्द्रमसः संबन्धि चान्द्रमसम् । 'तस्येदम्' इत्यण् । महत्कुलं वंशम् अदृष्टसंतानतया अदृष्टापत्यतया; अन्यत्र अदृष्टसुरद्रुमविशेषतया । 'संतानाः स्युरविच्छिन्नवंशा-

पत्यसुरद्रुमाः' इति रत्नमालायाम्। उदकानि धीयन्तेऽत्रेत्युदधिः समुद्रः। 'कर्मण्यधिकरणे च' इति किप्रत्ययः। 'पेषंवासवाहनधिषु च' इत्युदकशब्दस्योदादेशः। तस्य मथनात् विलोलनात् प्राक् पूर्वम्। 'अन्यारात्' इत्यादिना पञ्चमी। हरेरिन्द्रस्य। 'इन्द्रो दुश्च्यवनो हरिः' इति हलायुधः। वनं नन्दनमिव न शोभते न प्रकाशते ॥ २ ॥

**अवैषि विद्वन्नखिलं च वाङ्मयं**
**क्रियाः समस्ताः समयोचिता अपि।**
**विधीयतां देवरधर्मतस्त्वया**
**सुतोदयः काशिपतेरपत्ययोः ॥ ३ ॥**

अवैषीति। हे विद्वन् हे प्राज्ञ। अखिलं समस्तं वाङ्मयं वाग्जालम्। 'एकाचो नित्यं मयटमिच्छन्ति' इति मयट्। 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति प्रकृतिलिङ्गपरिहारेण नपुंसकत्वम्। अवैषि जानासि। किं च, समयोचिताः कालोचिताः समस्ताः क्रियाः कर्तव्याणि। अतः कारणात् काशिपतेः काशिराजस्यापत्ययोः दुहित्रोरम्बाम्बालिकयोः सुतोदयः पुत्रोत्पत्तिः। देवरधर्मतो देवरधर्मात्; 'स्वामिनो देवृदेवरौ' इत्यमरः। विधीयतां क्रियताम्। देवरात्तु सुतोत्पत्तेः कलियुगादन्यत्र स्मृत्युक्तत्वादित्यर्थः ॥ ३ ॥

**तयैवमुक्तः स जगाद साञ्जलि-**
**स्तथैव तद्वचाहृतमम्ब यत्त्वया।**
**निजां विमुञ्चेद्यदि वह्निरुष्णतां**
**त्यजेत्प्रतिज्ञां सुरसिन्धुनन्दनः ॥ ४ ॥**

तयेति। स भीष्मः तया योजनगन्धया एवमुक्तः अनेन प्रकारेणोक्तः साञ्जलिः सन् जगाद। किमित्याह— हे अम्ब मातः। 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वः। त्वया यद्वचो व्याहृतमुक्तं तद्वचस्तथैव। किं तु वह्निरग्निः; 'अग्निर्वैश्वानरो वह्निः' इत्यमरः। निजामुष्णतामुष्णत्वं विमुञ्चेद्यदि त्यजेच्चेत् सुरसिन्धुनन्दनो गङ्गापुत्रः; स्वोक्तावपि स्वनामग्रहणं कमप्युत्कर्षं द्योतयति 'रामः करोति' इतिवत्। प्रतिज्ञां तावत् 'भविष्याम्यहमूर्ध्वरेताः' इत्युक्तां संविदं त्यजेत्। 'हेतुहेतुमतोर्लिङ्'। अग्नेरुष्णत्वत्यागाभावान्मयाऽपि प्रतिज्ञा न त्यज्यत इति भावः ॥ ४ ॥

परश्वधाग्नौ भृगुसूनुना पुरा
हुतेषु सर्वेष्वपि बाहुजन्मसु ।
तदङ्गनासु प्रहितैर्द्विजन्मभिः
सुताः प्रतीता जनयांबभूविरे ॥ ५ ॥

परश्वधेति । त्वं पुनः प्रतिज्ञां न मुञ्चसि ; तर्हि कुलविच्छेदः स्यादित्यत्रोपायं वक्तुं वृद्धाचारं दर्शयति— पुरेति । पुरा पूर्वं भृगुर्जमदग्निः । 'भृगुर्दैत्यगुरौ शंभौ जमदग्निप्रतापयोः' इति रत्नमालायाम् । तस्य सूनुना परशुरामेण । परश्वधः परशुरेवाग्निर्वह्निः । 'परशुश्च परश्वधः' इत्यमरः । तस्मिन् । सर्वेष्वपि बाहुजन्मसु क्षत्रियेषु । 'बाहुजः क्षत्रियो विराट्' इत्यमरः । हुतेषु सत्सु ; एकविंशतिकृत्वो रामेण हतेष्वित्यर्थः । तेषां क्षत्रियाणामङ्गनासु प्रहितैर्नियुक्तैः ब्राह्मणैः कर्तृभिः प्रतीताः प्रख्याताः । 'प्रतीतः प्रथितः ख्यातः' इत्यमरः । सुताः पुत्राः जनयांबभूविरे जनिताः । 'कास्प्रत्ययात्' इत्यादिना आम्प्रत्ययः ॥ ५ ॥

अनेन पूर्वाचरितेन वर्त्मना
त्वयैव नः श्रेयसि जागरूकया ।
वधूद्वये प्रस्तुतकार्यसिद्धये
नियुज्यतां कोऽपि तपोनिधिर्द्विजः ॥ ६ ॥

अनेनेति । पूर्वैः वृद्धैराचरितेनानेन पूर्वोक्तेन वर्त्मना मार्गेण नोऽस्माकं श्रेयसि विषये जागरूकया जागरित्र्या, अप्रमत्तयेति यावत् । 'जागरूको जागरिता' इत्यमरः । त्वयैव प्रस्तुतं प्रकृतं यत्कार्यं कर्तव्यम् । 'ऋहलोर्ण्यत्' । तस्य सिद्धये निष्पत्तये वधूद्वये स्नुषायुगले ; द्वयोः स्नुषयोरित्यर्थः । 'वधूर्जाया स्नुषा स्त्री च' इत्यमरः । तपोनिधिः तपःशीलः कोऽपि कश्चित् द्विजो नियुज्यतां आदिश्यताम् । कर्मणि लोट् ॥ ६ ॥

तमब्रवीत्सा दधती ह्रियं ततः
पुरा मया नोद्वहने नियुक्तया ।
अधिष्ठितां भानुसुतातटस्थली-
मवाप संतानपरः पराशरः ॥ ७ ॥

तमिति । ततो भीष्मवचनानन्तरं सा योजनगन्धा ह्रियं लज्जाम् । 'मन्दाक्षं ह्रीस्त्रपा व्रीला लज्जा' इत्यमरः । दधती दधाना सती । 'नाभ्यस्ताच्छतुः' इति नुमभावः । तं भीष्ममब्रवीत् । वक्ष्यमाणं कन्याचेष्टितं लज्जाहेतुः । किमित्याह— हे वत्स । पुरा पूर्वं नौवहने तरणितारणे नियुक्तया निर्दिष्टया, पित्रेति शेषः । मया अधिष्ठितामध्यासिताम् । भानुसुताया यमुनायाः । 'कालिन्दी सूर्यतनया' इत्यमरः । तटस्थलीं तटभुवम् । 'जानपदकुण्डगोणस्थल' इत्यादिना स्थलशब्दस्याकृत्रिमार्थे ङीप् । पराशरः शक्तिपुत्रः । संतानं संततिः परं प्रधानं यस्य स तथोक्तः; मयि संतानमुत्पादयितुं तत्परः सन्नित्यर्थः । अवाप प्राप्तवान् ॥ ७ ॥

स मत्स्यगन्धं सहजं निरस्य मे
वितीर्णवान् योजनगन्धतामिमाम् ।
मया समं शापभयाद्विधेयया
हिमावृतं द्वीपमियाय यामुनम् ॥ ८ ॥

स इति । स पराशरः मे मम सहजं सहोत्पन्नम् । 'अन्येष्वपि दृश्यते' इति डप्रत्ययः । मत्स्यगन्धं निरस्य निर्धूय इमां वर्तमानां योजने गन्धो यस्याः सा योजनगन्धा । 'बहुव्रीहिः समानाधिकरणानामिष्यते' इति प्रायिकत्वात् व्यधिकरणो बहुव्रीहिः । तस्या भावस्तत्ता तां योजनगन्धताम् । 'त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यः' इति पुंवद्भावः । वितीर्णवान् दत्तवान् सन्, शापभयात् विधेयया विनयग्राहिण्या वशवर्तिन्येति यावत् । 'विधेयो विनयग्राही' इत्यमरः । मया समं हिमेन तुहिनेन आवृतं छन्नं मम लज्जापनोदार्थमित्यर्थः । यमुनायाः संबन्धि यामुनम् । 'तस्येदम्' इत्यण् । द्वीपं वारिमध्यतटमियाय प्राप्तवान् । द्वीपमित्यत्र द्विर्गता आपो यस्य तद्द्वीपम् । 'ऋक्पूरब्धूः' इति समासान्तोऽकारः । 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इत्याकारस्येकारः । 'द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम्' इत्यमरः ॥ ८ ॥

तदात्व एवाजनि मन्मुनिर्महान्
जटाशिखावानरणेरिवानलः ।
अनन्तवेदव्यसनेन यः स्वयं
जगत्त्रये व्यास इति प्रथामगात् ॥ ९ ॥

तदात्व इति । तदा भावस्तदात्वम् । अत्र प्रकृतिगतसप्तम्यर्थो न विवक्षितः, प्रयोग-

प्राचुर्यादिति शब्दप्रकाशिकायामुक्तेः तदात्वमित्यस्य तत्काल इत्येतावानेवार्थः । तथा च—'तत्कालस्तु तदात्वं स्यात्' इत्यमरः । तस्मिन् तदात्वे तदानीमेव; पराशरसंगमकाल एवेत्यर्थः । मत् मत्तः जटा एव शिखाः ज्वालाः अस्य सन्तीति जटाशिखावान्; 'तदस्य' इत्यादिना मतुप् । 'मादुपधायाश्च ..' इति मतुपो वकारः । महान्मुनिः अरणेर्निर्मथ्यदारुणः सकाशात् । 'अथारणिर्निर्मथ्यकाष्ठेऽग्निमन्थने' इति रत्नमालायाम् । अनलोऽग्निरिवाजनि जातः । 'दीपजन' इत्यादिना कर्तरि चिण् । 'जनिवध्योश्च' इति वृद्ध्यभावः । यो मुनिरनन्तानामपाराणाम्; 'अनन्ता वै वेदाः' इति श्रुतेरिति भावः । वेदानां श्रुतीनां व्यसनेन विवेचनेन जगत्त्रये लोकत्रये । व्यस्यति वेदानिति व्यासः । व्यास इति प्रथां ख्यातिमगात् प्राप । 'व्यासौ विस्तारतापसौ' इति रत्नमालायाम् ॥ ९ ॥

अयि स्मर त्वं जनयित्रि कर्मसु
क्षणादुपस्थास्य इति प्रणम्य माम् ।
वितीर्णकन्यात्वमदृश्यतां गतं
तमन्वगच्छत्पितरं तपोनिधिः ॥ १० ॥

अयीति । अयीति सानुनयसंबोधने । अयि जनयित्रि हे मातः कर्मसु व्यापारेषु स्मृतः चिन्तितः सन्; त्वयेति शेषः । क्षणात् क्षणमात्रादेव त्वामुपस्थास्ये उपगमिष्यामि । 'उपाद्देवपूजा' इत्यादिना संगतिकरणे आत्मनेपदम् । इति एवं केवलमुक्त्वेत्यर्थः । इतिशब्देनैव गम्यमानार्थत्वादुक्त्वेत्यस्याप्रयोगः । मां प्रणम्य प्रकर्षेण नत्वा तपोनिधिः व्यासः वितीर्णं दत्तं कन्यात्वं कुमारीत्वं येन तम् । अदृश्यतां अदृश्यत्वं गतं तं पितरं पराशरमन्वगच्छत् अनुगतवान् ॥ १० ॥

तनूभवोऽयं प्रथमो ममाज्ञया
सगर्भ्यदारेषु सुतान्प्ररोहयेत् ।
तवैवमिष्टं यदि सद्य एव तं
पुरः स्मरामि स्फुरितोरुतेजसम् ॥ ११ ॥

तनूभव इति । मम प्रथमः आद्यः अयं तनूभवः पुत्रो व्यासः आज्ञया मच्छासनेन सगर्भ्यस्य सोदर्यस्य 'सगर्भसयूथसनुताद्यत्' इति भावार्थे यत्प्रत्ययः । 'समानोदर्यसोदर्यसगर्भ्यसहजाः समाः' इत्यमरः । दारेषु जाययोरित्यर्थः । 'दाराः पुंसि च भूम्न्येव' इत्यमरः । सुतान् प्ररोहयेत् जनयेत् । एवमनेन प्रकारेण तवेष्टमभिमतं यदि तर्हि सद्यस्तत्क्षणमेव स्फुरितोरुतेजसं

स्फुरितानल्पतेजसं तं व्यासं पुरा स्मरामि स्मरिष्यामि । 'यावत्पुरानिपातयोः' इति भविष्यति लट् ॥ ११ ॥

निशम्य तद्विस्मयसंमुदस्पृशा
कृताभ्यनुज्ञा सरितः सुतेन सा ।
उपांशु सस्मार पराशरात्मजं
स चाविरासीदहिमांशुसंनिभः ॥ १२ ॥

निशम्येति । तत्पूर्वोक्तं वचनं निशम्य श्रुत्वा विस्मयसंमुदौ आश्चर्यहर्षौ स्पृशति प्राप्नोति यस्तथोक्तः । 'स्पृशोऽनुदके क्विन्' इति क्विन्प्रत्ययः । तेन सरितो गङ्गायाः सुतेन भीष्मेण कृताभ्यनुज्ञा कृतानुमतिः सा योजनगन्धा उपांशु रहसि 'रहश्चोपांशु चालिङ्गे' इत्यमरः । पराशरात्मजं व्यासं सस्मार स्मृतवती । अहिमांशुसंनिभो दिवाकरसदृशः । स च व्यास आविरासीत् आविर्बभूव ॥

प्रणामलग्नेन ललाटभस्मना
भृशं पवित्रीकृतपादपङ्कजा ।
सुतं सवित्री परिरभ्य वत्सला
दृशौ स्तनौ चोद्वहत्पयःस्रुतौ ॥ १३ ॥

प्रणामेति । प्रणामलग्नेन अभिवादनसंसक्तेन ललाटभस्मना ललाटभासितेन भृशमत्यर्थं पवित्रीकृते पूते पादपङ्कजे चरणकमले यस्याः सा तथोक्ता । वत्सला प्रेमवती सवित्री माता योजनगन्धा सुतं व्यासं परिरभ्यालिङ्ग्य स्तनौ कुचौ दृशौ नयने च पयः क्षीरं अम्बु च स्रवत इति पयःस्रुतौ । 'क्विप् च' इति क्विप् । 'पयः क्षीरं पयोऽम्बु च' इत्यमरः । उद्वहत् उद्वहति स्म ॥ १३ ॥

स सत्कृतः सत्यवतीं व्यजिज्ञप-
न्मनीषितं मातरवैमि तावकम् ।
तथा करिष्यामि विरूपता मम
प्रजावतीभ्यां समये विषह्यताम् ॥ १४ ॥

स इति । स व्यासः सत्कृतः पूजितः सन् सत्यवतीं योजनगन्धां व्यजिज्ञपत् विज्ञापितवान्। जानातेर्ण्यन्ताल्लुङ्। 'अर्तिह्री' इत्यादिना पुगागमः। 'णिश्रि' इत्यादिना चङ्। 'णौ चङ्युपधाया ह्रस्वः' इति ह्रस्वत्वम्। 'चङि' इति द्विर्वचनम्। 'सन्वल्लघुनि' इति सन्वद्भावः। 'सन्यतः' इत्यभ्यासस्येत्वम्। 'णेरनिटि' इति णिलोपः। हे मातः तव संबन्धि तावकम्; 'युष्मदस्मदोरन्यतरस्याम्' इत्यण्। 'तवकममकावेकवचने' इति तवकादेशः। मनीषितमभिलषितमवैमि जानामि। तथा करिष्यामि; यथा त्वदभिलषितं तथा करिष्यामीत्यर्थः। किं तु मम विरूपता वैरूप्यं प्रजावतीभ्यां भ्रातृजायाभ्याम्। 'प्रजावती भ्रातृजाया' इत्यमरः। समये संगमकाले विषह्यतां मृष्यताम्। 'परिनिविभ्यः' इति षत्वम्। यथा मम वैरूप्यं प्रजावत्यौ सहेते तथा यत्नं कुर्विति भावः ॥ १४ ॥

तिरोहितेऽस्मिंस्त्रिदशादृते मुनौ
शशाङ्कवंशाङ्कुरसंभवाशया ।
चिराय वध्वौ बहुभिर्निदर्शनै-
र्विधेयताया विषयीचकार सा ॥ १५ ॥

तिरोहित इति । त्रिदशैः देवैः आदृते अर्चिते। 'आदृतौ सादरार्चितौ' इत्यमरः। अस्मिन् व्यासमुनौ तिरोहिते अन्तर्हिते सति ततोऽनन्तरं सा योजनगन्धा शशाङ्कवंशस्य चन्द्रवंशस्याङ्कुरः प्ररोहः अपत्यमित्यर्थः। तस्य संभव उत्पत्तिः तस्मिन्नाशया वाञ्छया बहुभिरनेकैर्निदर्शनैः; लोके अनपत्या गतमृतभर्तृकाः स्त्रियो देवरात्सुतोत्पत्तिं लभन्ते। दृष्टं चैतावेतस्ततः, श्रुतं चास्माभिरिति दृष्टान्तैर्वध्वौ स्नुषे कर्मभूते चिराय बहुकालम्। 'चिरायचिररात्रायचिरस्याद्याश्चिरार्थकाः' इत्यमरः। विधेयताया विधेयत्वस्य विषयीचकार गोचरीचकार। कथंचिदङ्गीकारयति स्मेत्यर्थः। अभूततद्भावे च्विः। 'अस्य च्वौ' इतीत्वम् ॥ १५ ॥

नरेन्द्रपत्न्यौ निशि तत्र तल्पगे
पतिं स्मरन्त्यौ प्रयतेन चेतसा ।
मुनेरभूतां प्रतिपालितोदये
विधोर्विशाखे इव पूर्वमुद्गते ॥ १६ ॥

नरेन्द्रेति । तत्र तस्यां निशि रात्रौ 'पद्दन्नोमास्हृन्निशसन' इत्यादिना निशाया निश-

देशः। नरेन्द्रपत्न्यौ राजमहिष्यौ अम्बिकाम्बालिके तल्पगे शय्यागते सत्यौ। 'तल्पं शय्याट्टदारेषु' इत्यमरः। प्रयतेन नियमवता चेतसा चित्तेन पतिं भर्तारं विचित्रवीर्यं स्मरन्त्यौ भावयन्त्यौ सत्यौ पूर्वं प्राक् उद्गते उदिते विशाखे ताराविशेषौ विधोश्चन्द्रस्येव। 'विधुर्विष्णौ चन्द्रमसि' इत्यमरः। मुनेः व्यासस्य प्रतिपालितः प्रतीक्षितः उदयो याभ्यां ते तथोक्ते। सापेक्षत्वेऽपि गमकत्वात्समासः। अभूताम् ॥ १६ ॥

अथाम्बिका वासनिकेतमागता-
ज्जटाकलापाजिनवल्कधारिणः।
अहृद्यगन्धं दधतो विरूपतां
जुगुप्समाना निमिमील तापसात् ॥ १७ ॥

अथेति। अथानन्तरम् अम्बिका कर्त्री वासनिकेतं गर्भगृहम्। 'गर्भागारं वासगृहम्' इत्यमरः। आगतात् प्राप्तवतः। जटाकलापं जटासमूहम् अजिनं चर्म वल्कं वृक्षत्वक् धारयति यः स तथोक्तः तस्मात्। हृदयस्य प्रियो हृद्यः। 'हृदयस्य प्रियः' इति यत्प्रत्ययः। 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदयशब्दस्य हृदादेशः। हृद्यो न भवतीत्यहृद्यः अमनोहरो गन्धस्तं विरूपतां वैरूप्यं च दधतो दधानात्। तपोऽस्यास्तीति तापसः तपस्वी। 'तपःसहस्राभ्याम्' इत्यनुवृत्तौ 'अण् च' इति मत्वर्थीयोऽण्प्रत्ययः। तस्मात् व्यासात्; 'जुगुप्साविराम...' इत्यादिना पञ्चमी। जुगुप्समाना बीभत्समाना सती निमिमील निमीलितवती; लोचने इति शेषः। 'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्। प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया॥' इति वचनात् निमीलतेरकर्मकत्वम्। जुगुप्समानेत्यत्र 'गुप्तिज्किद्भ्यः सन्' इति सन्। सनाद्यन्तत्वाद्धातुसंज्ञायां 'सन्यङोः' इति द्विर्वचनम्। 'लटः शतृशानचौ' इति शानजादेशः। 'आने मुक्' इति मुगागमः ॥ १७ ॥

तथाविधां तामनुगृह्य निर्गतो
गृहात्कृतात्मा जननीं जगाद सः।
गजायुतप्राणभृदुद्भविष्यति
प्रमादतो मातुरचक्षुरात्मजः ॥ १८ ॥

तथाविधामिति । स मुनिः तथाविधां तत्प्रकारां निमीलितनयनामित्यर्थः । तामाम्बिकामनुगृह्य अनुभूय गृहान्निर्गतः सन् कृतात्मा निश्चितबुद्धिः सन् । 'आत्मा जीवे धृतौ बुद्धौ' इत्यमरः । जननीं जगाद । किमित्याह— गजानामयुतस्य शतसहस्रस्य प्राणं शक्तिं बिभर्ति यः स तथोक्तः । 'शक्तिः पराक्रमः प्राणः' इत्यमरः । मातुराम्बिकायाः प्रमादतो नेत्रनिमीलनरूपात् प्रमादात् अचक्षुः अनयनः, अन्ध इत्यर्थः । आत्मजः पुत्रः उद्भविष्यति उत्पत्स्यते ॥ १८ ॥

तया बभाषे स च नातिहृष्टया
भवन्तमन्याऽपि वधूरुदीक्षते ।
कुमारमुत्पाद्य तत्र तादृशं
विजेष्यते भूवलयं भुजेन यः ॥ १९ ॥

तयेति । नातिहृष्टया अत्यन्तमहृष्टया; ईषत्तुष्टयेति यावत् । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । तया योजनगन्धया स मुनिर्बभाषे उक्तः । अन्याऽपि वधूः स्नुषा भवन्तमुदीक्षते । प्रतिपालयति । यः कुमारः भुजेन बाहुना । 'भुजबाहू प्रवेष्टो दोः' इत्यमरः । 'भुजन्युब्जौ पाण्युपतापयोः' इति निपातनात् साधु । भूवलयं भूमण्डलं विजेष्यते । जयतेर्लृटि 'विपराभ्यां जेः' इत्यात्मनेपदम् । तादृशं तथाविधं कुमारं तत्र वध्वामुत्पाद्य जनय ॥ १९ ॥

तथेति मातुः प्रतिगृह्य शासनं
ययौ तदीयं भवनं तपोनिधिः ।
विलोक्य सा चैनमुवाह लज्जिता
विपाण्डरत्वं पुर एव दौहृदात् ॥ २० ॥

तथेति । तपोनिधिः व्यासः तथेति बाढमिति मातुर्जनन्याः शासनं नियोगं परिगृह्य स्वीकृत्य तदीयं अम्बालिकासंबन्धि भवनं गृहं ययौ । यातेर्लिटि 'आत औ णलः' इत्यौकारः । सा चाम्बालिका एनं व्यासं विलोक्य लज्जिता ह्रीणा सती दौहृदात् गर्भात् पुरः प्रागेव विपाण्डुरत्वं पाण्डुवर्णतामुवाह बभार । वहतेर्लिट् । 'लिट्यभ्यासस्योभयेषाम्' इति संप्रसारणम् । जन्यहृदयेन स्वहृदयेन च द्विहृदया गर्भिणी । यथाऽऽह वाहटः— 'मातृजं ह्यस्य हृदयं मातुश्च हृदयेन तत् । संबद्धं तेन गर्भिण्या नेष्टं श्रद्धाविमाननम् ॥' इति । तत्संबन्धात् गर्भो दौहृदमुच्यते ॥ २० ॥



॥ श्रीः ॥

विद्यारण्यकृतं

# ॥ रामायणरहस्यम् ॥

गुणाढ्यत्वं कारणत्वं शरण्यत्वं प्रकाशता ।
प्रकाशित्वं च निखिलैर्ध्येयता च नियन्तृता ॥१॥

एते ब्रह्मगुणा नित्या गायत्रीपदबोधिताः ।
प्रथमेन गुणाढ्यत्वं द्वितीयेन च लक्षणम् ॥२॥

तृतीयेन शरण्यत्वं चतुर्थेन प्रकाशता ।
पञ्चमेन पदेनैव प्रकाशित्वं प्रबोध्यते ॥ ३ ॥

षष्ठेन ध्येयताऽथान्त्यैश्चतुर्भिश्च नियन्तृता ।
श्रीसंक्षेपेऽपि दृश्यन्ते मन्त्रवाच्या इमे गुणाः ॥४॥

को न्वस्मिन् सांप्रतं लोक इत्यारभ्य विशेषतः ।
उक्ता गुणाढ्यता विष्णोः श्लोकैरष्टादशैः स्फुटम् ॥

गुणप्रकरणेऽत्रैवाप्युक्ताः कारणतादयः ।
प्रजापतिसमः श्रीमान् धातेति स्रष्टृतेरिता ॥ ६ ॥

संहर्तृता चात्र रिपुनिषूदन इतीरिता ।
रक्षिता जीवलोकस्येत्यादिना स्थितिकर्तृता ॥ ७ ॥

इत्थं कारणताऽनेन श्लोकेन प्रतिपादिता ।
सर्वदाऽभिगतः सद्भिः समुद्र इव सिन्धुभिः ॥ ८ ॥

इत्यादिषु शरण्यत्वं शरण्यस्याभिधीयते ।
ज्ञानसंपन्न इत्यत्र प्रकाशत्वं प्रदृश्यते ॥ ९ ॥

ज्ञानत्वेनैव संपन्न इति ज्ञानात्मतेरिता ।
नो चेत्सर्वज्ञशब्देन पुनरुक्तिर्भवेदिति ॥ १० ॥

सर्वज्ञः सत्यसन्धश्च प्रजानां च हिते रतः ।
इत्यत्र स्थितसर्वज्ञपदेनोक्ता प्रकाशिता ॥ ११ ॥

यशस्वी ज्ञानसंपन्नः शुचिर्वश्यः समाधिमान् ।
इत्यत्र वश्यशब्देन भक्तवश्यत्ववाचिना ॥ १२ ॥

ध्येयत्वं च गुणो विष्णोरर्थतः प्रतिपादितः ।
नियतात्मा महावीर्यो द्युतिमान्धृतिमान्वशी ॥ १३ ॥

इत्यत्र वशिशब्देन बोध्यते च नियन्तृता ।
वृत्तान्ते यौवराज्यादौ सूच्यन्ते त इमे गुणाः ॥ १४ ॥

सामान्येन गुणाढ्यत्वं सुस्पष्टं तत्र तत्र च ।
शबरीशरभङ्गादिवृत्तान्ते स्थितिकर्तृता ॥ १५ ॥

दशग्रीववधाद्ये तु वृत्तान्ते लयकर्तृता ।
इत्यादौ जन्मकर्तृत्वं समुत्थाप्य च वानरान् ॥

विभीषणादिवृत्तान्ते शरण्यत्वं प्रकाशितम् ।
निग्रहानुग्रहत्वाभ्यामीशित्वं तस्य बोधितम् ॥ १७ ॥

इत्यत्रार्थाद्ध्येयता च पूजितः सर्वदैवतैः ।
चातुर्वर्ण्यं च लोकेऽस्मिन् स्वे स्वे धर्मे नियोक्ष्यति ।
इत्यादिषु नियन्तृत्वमित्यर्थः सांप्रदायिकः ॥१८॥

अत्रेदं मानमुक्तार्थसंप्रदायनियामकम् ।
प्रबन्धाद्यन्तयोर्दृष्टे गायत्र्याद्यन्तिमाक्षरे ॥ १९ ॥

उक्तार्थविषयाच्चान्यो विशेषः सांप्रदायिकः ।
अस्ति गुह्यतमः सोऽपि विस्तरेण प्रकाश्यते ॥२०॥

प्रणम्य माधवारण्यं तत्रश्राप्तादुपदेशतः ।
व्याकरोम्यत्र गायत्रीमन्त्रवर्णान्पृथक् पृथक् ॥२१॥

आदिवर्णो हरेर्वक्ति सत्यज्ञानादिकान् गुणान् ।
तद्गुणे प्रकृतार्थोक्तौ ब्रह्महेत्वोरिति स्मृतेः ॥२२॥

सश्च सत्यप्रतिज्ञत्वं वक्ति सः पुंस्युमासुते ।
वायौ ज्ञाने बुधे सत्यप्रतिज्ञायामिति स्मृतेः ॥२३॥

पराभिभूतिसामर्थ्यं विकारेण विबोध्यते ।
विश्वचक्षुषि व्योम्नि वाते परमात्मनि पक्षिणि ॥२४॥

वैश्ये विजयसामर्थ्ये विशेषेऽर्क इति स्मृतेः ।
तुकारेणोच्यते विष्णोश्चक्राद्यायुधसंग्रहः ॥२५॥

तुरायुधे तदादाने चोरे कान्ताविति स्मृतेः ।
वक्ति पूर्ववकारोऽयं हरेरभयदायिताम् ॥ २६ ॥

वो भीनिवारणे पूज्ये सान्त्वे काम इति स्मृतेः ।
रेकारस्तु भगवतो वक्ति भक्तनिषेव्यताम् ॥ २७ ॥

रेशब्दः पावके कामे भक्तसेव्य इति स्मृतेः ।
णिकारो ब्रह्मणो वक्ति दीनानाथशरण्यताम् ॥२८॥

णः शरण्यकृपाशूरभीतिपद्योष्विति स्मृतेः ।
यकारः पूर्वपादान्तो मित्रापिश्वासवाचकः ॥ २९ ॥

यस्त्यागे निलये कामे दातरीशे च धातरि ।
भीत्यभावे यमे मित्रे विश्वासेऽग्नाविति स्मृतेः ॥

बलाविष्करणं विष्णोर्भकारेण प्रकाश्यते ।
भः शंभौ भ्रमणे भावे सत्वव्यक्ताविति स्मृतेः ॥

आश्रितानन्दकारित्वं गकारेणाभिधीयते ।
गश्च हर्षप्रदे गीते गन्धर्वोक्ताविति स्मृतेः ॥ ३२ ॥

देकारेण वकारेण सर्वपूज्यत्वमुच्यते ।
देकारो दातरि च्छेदे पूज्ये दानकलत्रयोः ।
वो भीनिवारणे पूज्ये सान्त्वे काम इति स्मृतेः ॥

स्यशब्देनोच्यते विष्णोर्दीनदुःखापनोदनम् ।
स्या गुणे स्यं भवे स्यस्तु दुःखहानाविति स्मृतेः ॥

धीशब्दस्तु भगवतो धर्मस्थापनवाचकः ।
धीस्तु धर्मप्रदे धर्मे धृतिज्ञप्त्योरिति स्मृतेः ॥३५॥

आधिव्याधिहरत्वार्थे मश्च हिश्चाक्षरे उभे ।
मोऽग्नौ जीवे व्याधिनाशे धातरीन्दौ च मा श्रियाम् ॥

हिस्तु व्याधिपरीहारे वैद्ये हेताविति स्मृतेः ।
धीशब्दाच्छुभसङ्कल्पयोर्हेतुत्वराभिधीयते ॥ ३७ ॥

धीस्तु विद्यात्मकल्याणसदाचारेष्विति स्मृतेः ।
नानाभीत्यपहारित्वं यद्वयेनाभिधीयते ॥ ३८ ॥

यस्त्यागे निलये कामे ज्ञातरीशे च धातरि ।
भीत्यभावे यमे मित्रे विश्वासेऽग्नाविति स्मृतेः ॥

विष्णोरत्राखिलैश्वर्यप्रदत्वं वक्ति नः पदम् ।
अस्मदर्थे सर्वलोकश्रीदाने सुधि नः पदम् ॥ ४० ॥

ना पुमान् नौर्जलोत्तारे नेत्यभाव इति स्मृतेः ।
निःसीमाभ्यधिकस्थानप्राप्तिरुक्ता प्रशब्दतः ॥४१॥

प्रो जटायां प्रकृष्टार्थस्थानप्राप्ताविति स्मृतेः ।
सर्वलोकनियन्तृत्वं चोशब्देनाभिधीयते ॥ ४२ ॥

समुच्चये चेतिशब्दश्चोशब्दश्च नियन्तरि ।
चस्तुलुष्के खरे चोरे पुंश्चकोर इति स्मृतेः ॥ ४३ ॥

[1]सर्वलोकाधिपत्यं हि विष्णोरुक्तं दशब्दतः ।
दं कलत्रेषु दः सर्वलोकाधिप इति स्मृतेः ॥ ४४ ॥

समस्तफलदातृत्वं यादित्यन्तिममक्षरम् ।
यास्त्रियां पदपञ्जर्योर्यद्धेतौ यात् फलप्रदे ॥ ४५ ॥

यमित्यव्ययमोंकारे शोभालक्ष्म्योरिति स्मृतेः ।
एवमेते ब्रह्मगुणा गायत्रीवर्णबोधिताः ॥ ४६ ॥

---

[1] क. ख. विभूतिद्वितयैश्वर्यमुक्तं विष्णोर्दशब्दतः ।

प्रकाश्यन्ते रामकथासंग्रहे नारदेरिते ।
तत्तद्गुणपरे ग्रन्थे ते ते वर्णाः समुद्धृताः । ४७ ॥

तदित्यस्यैकदेशस्तु प्रबन्धादौ समुद्धृतः ।
तद्योर्यंधीणिनश्चो च वर्णास्तत्रार्धमुद्धृताः ॥ ४८ ॥

केचिद्वर्णास्त्वेकदेशे रहस्ये चात्मभूद्धृताः ।
वान्तात् पूर्वो वर्ण इति नान्तो तः पदमित्यपि ॥

स जगाम वनं वीर इत्यत्रैव स उद्धृतः ।
विराधं राक्षसं हत्वेत्यत्र विश्च समुद्धृतः ॥ ५० ॥

खड्ग च परमप्रीतस्तूणी चेत्यत्र तुः कृतः ।
वसतस्तस्य रामस्येत्यादिग्रन्थे व उद्धृतः ॥ ५१ ॥

संगतो वानरेणेति स्थले रेकार उद्धृतः ।
हनुमद्वचनाच्चैव सुग्रीवेणेति तत्र णः ॥ ५२ ॥

सुग्रीवायेत्यत्र पदे यंवर्णस्यार्धमुद्धृतम् ।
उत्स्मीयत्वेत्यस्य पूर्वं भकारश्च समुद्धृतः ॥ ५३ ॥

ततोऽगर्जद्धरिवर इत्यत्रैव विभाति गः ।
अभिषिच्येत्युत्तरत्र वोऽस्ति देकारपूर्वकः ॥ ५४ ॥

भरतस्यान्तिकं राम इत्यत्र स्येति चाक्षरम् ।
एकदेशेन धीकारः सुधार्मिक इति स्थले ॥ ५५ ॥

निरामयो ह्यरोगश्चेत्यत्र मश्च हिकारयुक् ।
नार्यश्चाविधवेत्यत्र धीशब्दश्चैकदेशतः ॥ ५६ ॥

न चाग्निजं भयं किंचिदिति श्लोके तु यद्वयम् ।
नगराणि च राष्ट्राणीत्यत्र नः पदमुद्धृतम् ॥ ५७ ॥

अश्वमेधशतैरिष्ट्वेत्यादिश्लोके प्र उद्धृतम् ।
चोवर्णस्त्वेकदेशेन चातुर्वर्ण्यमिति स्थले ॥ ५८ ॥

दशवर्षसहस्राणीत्यक्षरोपान्त उद्धृतः ।
समुद्धृतं प्रबन्धान्ते गायत्रीचरमाक्षरम् ॥ ५९ ॥

वाल्मीकिरत्र सिद्धार्थान् व्याचकार सुविस्तरम् ।
पूर्णं रामायणं श्लोकैश्चतुर्विंशत्सहस्रकैः ॥ ६० ॥

श्लोकोऽयं तप इत्यादिस्तत्प्रबन्धस्य चादिमः ।
सुप्रतिष्ठित इत्यन्तं श्रीमद्रामायणं विदुः ॥ ६१ ॥

प्रतिश्लोकसहस्रादौ मन्त्रवर्णाः समुद्धृताः ।
चतुर्विंशत्सहस्राणामाद्यश्लोकाः पृथक् पृथक् ।
क्रमेण दर्शयिष्यन्ते गायत्र्यक्षरगर्भिताः ॥ ६२ ॥

श्रीमद्बालकाण्डे प्रथमसर्गादौ—

तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुंगवम् ॥

त्रिंशे सर्गे—

स तेन परमास्त्रेण मानवेन समाहतः ।
संपूर्णं योजनशतं क्षिप्तः सागरसंप्लवे ॥

त्रिषष्टितमे सर्गे—

विश्वामित्रो महातेजा भूयस्तेपे महातपाः ।
ततः कालेन महता मेनका परमाप्सराः ॥

अयोध्याकाण्डे चतुर्दशे सर्गे—

चतुरश्वो रथः श्रीमान्निस्त्रिंशो धनुरुत्तमम् ।
वाहनं नरसंयुक्तं छत्रं च शशिसंनिभम् ॥

चतुश्चत्वारिंशे सर्गे—

वर्तते चोत्तमां वृत्तिं लक्ष्मणोऽस्मिन् सदाऽनघः ।
दयावान् सर्वभूतेषु लाभस्तस्य महात्मनः ॥

एकसप्ततितमे—

द्वारेण वैजयन्तेन प्राविशच्छ्रान्तवाहनः ।
द्वाःस्थैरुत्थाय विजयं पृष्टस्तैः सहितो ययौ ॥

एकोनशततमे—

उटजे राममासीनं जटामण्डलधारिणम् ।
तं तु कृष्णाजिनधरं चीरवल्कलवाससम् ॥

श्रीमदारण्यकाण्डे द्वादशे सर्गे—

ते वयं वनमत्युग्रं प्रविष्टाः पितृशासनात् ।
द्रष्टुमिच्छामहे सर्वे भगवन्तं निवेद्यताम् ॥

सप्तचत्वारिंशे सर्गे—

मम भर्ता महातेजा वयसा पञ्चविंशकः ।
अष्टादश हि वर्षाणि मम जन्मनि गण्यते ॥

श्रीमत्किष्किन्धाकाण्डे चतुर्थे सर्गे—

ततः परमसंहृष्टो हनुमान् प्लवगर्षभः ।
प्रत्युवाच ततो वाक्यं रामं वाक्यविशारदः ॥

इति। द्वितीयमपि क्रियारूपम्, कारकरूपम्, नामरूपम्, अव्ययरूपम्, निपातरूपम्, उप-सर्गरूपं च। तेषु क्रियारूपं यथा— भोक्तुं व्रजति, भोजको व्रजति, गोदायो व्रजति, कर्तुमि-च्छति, इति। कारकरूपं यथा— कुम्भकारः, उत्तानशयः, शय्योत्थायम्, मूलकोपदंशम्, इति। नामरूपं यथा—कालो भोक्तुम्, समयो भोक्तुम्, ब्रह्मभूयम्, ब्रह्मोद्यम्, इति। अव्ययरूपं यथा—दिवाकरः, दोषाकरः, मृषोद्यम्, ईषत्पानः, इति। निपातरूपं यथा—अलं कृत्वा, खलु कृत्वा, यावद्वेदम्, अन्यथाकारम्, इति। उपसर्गरूपं यथा— प्रजवी, प्रसवी, विकत्थी, निराक-रिष्णुः, इति। तृतीयं क्रियारूपम्, कारकरूपम्, नामरूपम्, अव्ययरूपम्, निपातरूपम्, कर्मप्रवचनीयरूपं चेति। तेषु क्रियारूपं यथा—न त्वां तृणाय मन्ये, संतापाय प्रभवति, गोषु दुह्यमानासु गतः, क्रोशतः प्राव्राजीदिति। कारकरूपं यथा—

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः॥

केशेषु प्रसितः, ब्राह्मणेषु भुञ्जानेषु वृषला आसते, वृषलेष्वासीनेषु ब्राह्मणा भुञ्जते, इति। नामरूपं यथा—गवां स्वामी, अन्नस्य हेतोर्वसति, पित्रा सदृशः, शिवं प्रजाभ्यः, इति। अव्ययरूपं यथा—समया ग्रामम्, सह च्छात्रेण, नमो देवेभ्यः, दक्षिणाहि ग्रामात्, इति। निपात-रूपं यथा—हे देवदत्त, हा देवदत्तम्, विना विष्णुमित्रेण, ऋते यज्ञदत्तात्, इति। कर्मप्रवचनीयरूपं यथा—वृक्षमनु विद्योतते, उपार्जुनं योद्धारः, अधि ब्रह्मदत्ते पञ्चालाः, अधि पञ्चालेषु ब्रह्मदत्त इति।

प्रकृतिप्रत्ययावेवमुपस्कारश्च दर्शितः।
क्रमादुपपदस्यापि स्वरूपमुपवर्णितम्॥

अव्ययानि निपाताश्च गतयश्च निरूपिताः।
कर्मप्रवचनीयाश्च सोपसर्गाः प्रकाशिताः॥

न केवलेह प्रकृतिः प्रयुज्यते
न केवलाः सुप्तिङजण्क्यजादयः।
भवत्युपस्कार इहापृथग्द्वयो-
र्द्वयार्थमेवोपपदं प्रयुज्यते॥

॥ इति महाराजाधिराजश्रीभोजदेवविरचिते शृङ्गारप्रकाशे प्रकृत्यादिप्रकाशो नाम प्रथमः प्रकाशः॥

## ॥ द्वितीयः प्रातिपदिकादिप्रकाशः ॥

---

प्रातिपदिकं त्रिधा—विभक्तावयवम्, अविभक्तावयवम्, अनुकरणं च । तत्र विभक्तावयवं त्रिधा—कृद्रूपम्, तद्धितरूपम्, समासरूपं च । तेषु भावकारकाभिधायिनो धातुप्रत्ययाः कृतः । तत्र धात्वर्थ एवापूर्वापरीभूतो भावः; यदाह—

कालानुपाति यद्रूपं धात्वर्थस्य क्रियेति तत् ।
परितो यत् परिच्छिन्नं तद्भाव इति कथ्यते ॥

स इह षोढा संभवति—सिद्धः, साध्यः, सिद्धासमाप्तः, साध्यासमाप्तः, सिद्धसाध्यः, साध्यसिद्धश्चेति । तेषु उद्भूतप्रत्ययांशत्वेन क्रियानुद्रेकात् सत्त्वभूतत्वे लिङ्गसंख्याद्युपग्राही 'कर्तृकर्मणोः कृति' (पा॰ २–३–६५) इति संबन्धविभक्तेर्निमित्तं सिद्धः; यथा—आश्चर्यमिदमोदनस्य च पाको ब्राह्मणानां च प्रादुर्भावः, भेदिका काष्ठानां देवदत्तस्य, चिकीर्षा यज्ञदत्तस्य कटस्य इति । अत्र उभयप्राप्तौ कर्मण्येव इति नियमे उभयोः प्राप्तिर्यस्मिन् कृति इति व्याख्यानात्, अकाकारयोश्च नियमप्रतिषेधात्, कर्तर्यपि षष्ठ्येव भवन्ती भावस्य सिद्धतां द्योतयति । उद्भूतप्रकृत्यंशत्वेन क्रियोद्रेकादसत्त्वभूतत्वे लिङ्गसंख्याद्यनुपग्राही कर्तृकर्मणोः कारकविभक्तेरेव निमित्तं साध्यः; यथा— ओदनं भोक्तुं याति, स्वाध्यायमधीत्य स्नापयति, पयः पायं पायमास्ते, इति । अत एव 'न लोक' (पा. २–३–६९) इत्यादिना षष्ठी निषिध्यते । सिद्ध एव तद्धितानुबन्धी सिद्धासमाप्तः; यथा—व्यावक्रोशी, साङ्कूटिनम्, कृत्रिमम्, इति । अत्र यथा आभिजित्यः, कौञ्जायन्यः इत्यादावणाद्यभिहितोऽप्यपत्यार्थः, तैत्तिरीयाः छागलेयिनः इत्यादौ छणाद्यभिहितोऽपि प्रोक्तार्थः, स्वार्थिकाध्येतृवेदितृविषयतद्धितोत्पत्तिमन्तरेण न समाप्यते, तथा व्यतिहाराभिविध्युपाधिको णाजिनुणुक्तः शुद्धश्च कृत्याभिहितः सिद्धोऽपि भावः स्वार्थिकनिर्वृत्तार्थीयतद्धितोत्पत्तिमन्तरेण न समाप्यत इति सिद्धासमाप्तो भवति । साध्य एवानुप्रयोगानुबन्धी साध्यासमाप्तः; यथा—चकासांचकार, विदाङ्कुर्वन्तु, रैपोषं पुष्यति इति । अत्र यथा शुक्लीभवति, पटपटाकरोति, इत्यादावभूततद्भावादिषु च्व्याद्यन्तम्, लुनीहि लुनीहीत्येवायं लुनाति, राष्ट्रमट मठमट दूरमटेत्येवायमटति, इत्यादिषु क्रियासमभिहारादिषु लोडन्तम् अनभिव्यक्तपदार्थकत्वादसमाप्तं स्वार्थाभिव्यक्तये कृभ्वाद्यनुप्रयोगं यथाविध्यनुप्रयोगं चापेक्षते, तथा आमन्तं णमुलन्तं चानभिव्यक्तपदार्थकत्वादसमाप्तं साध्यरूपमेव स्वार्थाभिव्यक्तये कृभ्वाद्यनुप्रयोगं यथाविध्यनुप्रयोगं चापेक्षत इत्येतदुक्तो भावः साध्यासमाप्तो भवति । तदाह—'आम इव णमुलोऽप्यसमाप्तार्थत्वाच्चादिवदनुप्रयोगः सिद्ध एव यथाविध्यर्थे

तु वचनं कषादिषु यथाविध्यनुप्रयोगः' इति। तेन चकासांचकार इत्यादिनाऽयमर्थो भवति—चकास्ति स्म, विदन्तु, रायः पुष्यन्नमुं पुष्यति, इति। अत एव क्रियाविशेषणेनैव सिद्धमिति न केचित् णमुल्प्रकरणमारभन्ते। ननु च क्रियाविशेषणानां कर्मता नपुंसकता च; कथं च पुषेरेव पुषिः कर्म भवति? न ह्यात्मनैवात्मा व्याप्यते; न हि सुशिक्षितोऽपि वटुः स्वं स्कन्धमारोढुं शक्नोति। नैवम्; नागरकं वृत्तं वर्तेत, विश्वजिता यजेत, इत्यादौ सामान्यविशेषयोरनैकात्म्येन व्याप्त्यवच्छेदयोरुपलम्भात् सामान्यपुषेरेवावयवपुषिः कर्म भवति। न च क्रियाविशेषणानां कर्मतैवेति नियमः; क्रिया हि यथा साध्यमानत्वात् कर्म, तथोत्पद्यमानत्वात् कर्त्र्यपि भवति; ततश्चोभयथाऽपि क्रियाविशेषणानि योज्यन्ते—रैपोषं कृत्वा पुष्यति, रैपोषं यथा भवत्येवं पुष्यतीति। सिद्ध एव साध्यधर्मयोगी सिद्धसाध्यः; यथा—आश्चर्यो गवां दोहोऽशिक्षितेनागोपालेन, साधु खलु पयसः पानं यज्ञदत्तेन, विचित्रा हि सूत्रस्य कृतिः पाणिनिना, इति; अत्र उभयप्राप्तौ कर्मण्येव षष्ठीति कर्तरि तृतीयाम्नानात् सिद्धोऽप्ययं विवक्षातः साध्योऽपि भवतीति ज्ञायते। अन्ये त्वन्यथा सिद्धसाध्यं वर्णयन्ति—उष्ट्रासिकामास्ते, पञ्च वारान् भुङ्क्ते, पञ्च प्रयोगान् पचति, इति। अत्रोष्ट्रासिकावारप्रयोगाणां क्रियाविशेषावृत्त्यनुष्ठानरूपत्वेनापृथग्भावात् क्रियाभिव्याप्यानां द्वितीयादर्शनादभेदविवक्षातः सिद्धानामपि क्रियावदेव साध्यत्वमवगम्यते; तदाह—

तत्स्वभावविशेषत्वाद्व्याप्या नोष्ट्रासिकाऽनया।
साध्यत्वे त्वासनैकात्म्यात् फलतः कर्म कथ्यते॥

सोऽयमित्यभिसंबन्धादभेदे धर्मधर्मिणोः।
क्रियाया इव साध्यत्वं वारादीनां न दुष्यति॥

तेन उष्ट्रासिकामास्ते इत्यादीनामयमर्थो भवति- उष्ट्रवदास्ते, पञ्चावृत्तिं भुजिक्रियां करोति, पञ्च पाकान्निर्वर्तयति इति। साध्य एव सिद्धधर्मयोगी साध्यसिद्धः; यथा—कर्तव्यं भवतः, कार्यं भवतः, कृतं भवतः, इति। अत्र 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' (पा. २-३-६९) इति लादीनां साध्यार्थाभिधायित्वात् कर्तृकर्मणोः षष्ठीनिषेधे, 'कृत्यानां कर्तरि वा' 'क्तस्य च वर्तमाने' (पा. २-३-७१, ६७) 'नपुंसके भावे उपसंख्यानम्' इत्यादिभिः पुनः षष्ठीविधानात् पक्षे विवक्षातः सिद्धार्थाभिधायित्वमवगम्यत इत्येतदुक्तो भावः साध्यसिद्धो भवति। न चात्र कृत्यानां निषेधो न श्रूयते, यतः खलर्थतृनामित्यत्र खलर्थेत्यनेन कृत्यक्तखलर्थाः शतृशानचानशश्च संगृह्यन्ते; तृन्नित्यनेन पुनस्तृन्नेवेति। अत एव निष्ठादिभावस्येव कृत्यभावस्य कर्मण्यपि षष्ठी न भवति; यथा—

गतमस्तं यथाऽर्केण यथाऽभ्युदितमिन्दुना ।
तथा मानेन शैथिल्यमागन्तव्यं मृगीदृशः ॥

कथं पुनः सकर्मकात् भावप्रत्ययः ? तेन ह्यकर्मकाद्भवितव्यम्; यदाह 'लः कर्मणि च भावे चाकर्मकेभ्यः' (पा. ३ - ४ - ६९) 'तयोरेव कृत्यक्तखलर्थाः' (पा. ३ - ४ - ७०); न हि भवति कृतं कटं देवदत्तेनेति । उच्यते—नैतदन्तरङ्गं द्रव्यकर्म, अपि तु 'कालाध्वभावगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' इति बहिरङ्गेषु कालादिकर्मसु गन्तव्यलक्षणं गत्यर्थकर्म; बहिरङ्गता च 'कालाध्वनोरत्यन्तसंयोगे' (पा. २ - ३ - ५) इत्यनेन द्वितीयाविधानेन, भावस्य च कालादभेदेन, गन्तव्यस्य तु 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ' (पा. २ - ३ - १२) इति पुनर्द्वितीयाग्रहणेन ज्ञायते; अन्यथा हि कर्मणि द्वितीयायाः सिद्धत्वात् गत्यर्थकर्मणि चतुर्थी चेत्येव ब्रूयात् । यस्यैव च द्रव्यकर्मणोऽन्तरङ्गस्याभावेनाकर्मकः, तस्यैव भावेन सकर्मको भवति; अतो विद्यमानमपि कालादिकर्म नाकर्मकव्यपदेशं विघ्नयति । अन्ये त्वन्यथा साध्यसिद्धं वर्णयन्ति—उष्ट्रासिका आस्यन्ते, हतशायिकाः शय्यन्ते, यवाग्वाः पाकाय व्रजति इति । अत्र आसिकाशायिकयोराख्याताभिहितक्रियात्मकत्वात् पाकस्य व्रजिक्रियासाध्यत्वात्, सत्यपि साध्यत्वे लिङ्गसंख्यासंबन्धिविभक्तियोगाद्विबक्षातः सिद्धत्वमपि गम्यत इत्ययं साध्यसिद्धो भवति । तथाऽपि उष्ट्रासिका आस्यन्ते, हतशायिकाः शय्यन्ते, इत्यमूभ्यां सामान्यविशेषोपचरितरूपो भावात्मैव प्रत्याय्यते; स आख्याताभ्यां सामान्यरूपेण, ण्वुलन्ताभ्यां विशेषरूपेण । बहुवचनं तु कुत्सातिशयार्थम्; या हि नामोष्ट्रस्य कुत्सावत्यो बहुप्रकारजुषो बह्व्यः आसिकाः, याश्च हतानामतिशयवत्यस्तथाभूता एव भूयस्यः शायिकाः प्रतीताः, ताभिः विशेषरूपाभिरियमासिका शायिका च उपमानोपमेयसंबन्धजनितभेदाभेदपरिग्रहाङ्गकारेणापि सामान्यविशेषभावेन कुत्सातिशयार्थं बहुत्वेनैव प्रत्याय्यते, बहुत्वेन विना सामान्यविशेषभावानुपपत्तेः; तेनोष्ट्रासिका इवासनानि, हतशायिका इव शयनानि क्रियेन्त भवन्तीति वा वाक्यार्थो भवति । नन्वेवमुष्ट्रासिकादीनां वारप्रयोगादीनां च कर्मतेव नपुंसकताऽपि प्राप्नोति; यथा—मृदु पचति, प्रशस्तं पचतीति । उच्यते—त्रिधा खलु क्रियाविशेषणं भवति— बाह्यम्, आभ्यन्तरम्, बाह्याभ्यन्तरं च; तत्र बाह्यं धर्मरूपं वारादि; आभ्यन्तरं विशेषरूपमुष्ट्रासिकादि, बाह्याभ्यन्तरं गुणरूपं मृद्वादि । तेषु बाह्यं सोऽयमित्यभिसंबन्धादभेदोपचारेणाविचलितस्वरूपमेव प्रधानं विशिंषत् कथमिव स्वलिङ्गं जह्यात्? आभ्यन्तरं तु विशेषांशपरिग्रहादाविष्टलिङ्गसंख्यं कथमिव वाऽन्यलिङ्गं गृह्णीयात्? बाह्याभ्यन्तरं तु गुणत्वात् स्वलिङ्गविरहे 'गुणवचनानामाश्रयतो लिङ्गवचनानि' (महाभाष्यम् १ - २ - ६४) इति विशेष्यलिङ्गग्राह्येव भवति; तत्र साध्यैकत्वभावत्वाद्लिङ्गसंख्यायाः क्रियाया विशेषणत्वे मृद्वादीनां नपुंसकत्वमेव न्याय्यम् । उष्ट्रासिकावारादीनां तु

नित्यमाविष्टलिङ्गत्वाद्विशेषांशपरिग्रहात् क्रियाविशेषणत्वेऽपि न नपुंसकलिङ्गता । अथ पाकाय व्रजति, एधेभ्यो व्रजति, इति क्रिया रन्धनाय स्थालीतिवत् तादर्थ्यचतुर्थ्यन्तः सिद्ध एव कस्मान्न विज्ञायते? नैवम्, 'भाववचनाश्च' (पा. ३-३-११) इति तादर्थ्ये एव प्रत्ययोत्पत्तेः, 'तुमर्थाच्च भाववचनात्' (पा. २-३-१५) इति स्वार्थे एव चतुर्थीविधानात् । किमर्थं पुनरिदम्? भावे हि घञादयः सिद्धा एव, तादर्थ्ये चतुर्थी । क्रियार्थोपपदेन तुमुनाऽस्मिन् विषये घञादयो मा बाधिषत; वासरूपविधिश्चात्र तुमुन्ण्वुलाविति ण्वुल्ग्रहणान्नावतरति । अथ यथैधानाहर्तुं व्रजति एधेभ्यो व्रजतीति 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' (पा. २-३-१४) इति चतुर्थी, तथा पाकं कर्तुं व्रजति पाकाय व्रजतीति यदि भवेत्, को दोषः स्यात्? न कश्चित्; किं त्वेतत् पृच्छामि—स पाकः सिद्धः साध्यो वा? यदि सिद्धः किं कर्तुं व्रजति? अथ साध्यः, क्रियार्थोपपदेषु तुमुना घञादयो बाध्यन्ते । अथ तुमर्थत्वेन साध्याभिधायिनश्चतुर्थ्यन्तत्वेन चासत्त्वभूतार्थाः पाकायेत्यादिषु घञादयः, कथं यवाग्वा इत्यादेः संबन्धविभक्तेर्निमित्तं भवति? शब्दशक्तिरेषा यत् कस्यचिदेव केनचित्, केनचिदेव कस्यचित्संबन्धः; तद्यथा— अभिप्रेऽप्यर्थे प्रजागरिताऽपररात्रानिति तृनो बाह्यकर्मोपसर्गकर्मयोगात् जायते, न जागरूक इत्युक्तस्य; ऊरीकरोति पाकादिकमित्यूर्यादीनामेकानेकविशेषस्थया करोतिक्रियया भवति संबन्धः, न तदर्थविषयैः पचादिभिः; सूर्यमपि न पश्यन्ति असूर्यपश्या राजदारा इति व्यवहितामपि सूर्यकर्मिकां दृशिक्रियां नञ् निषेधति, न सूर्यसत्ताम्; एवं न पुनर्गीयन्ते अपुनर्गेयाः श्लोकाः, श्राद्धं न भुङ्क्ते अश्राद्धभोजी ब्राह्मण इति । तथा लवणं न भुङ्क्ते अलवणभोजी भिक्षुः इत्यसूर्यपश्यादिवदसामर्थ्येऽपि नञ्समासो दृश्यते; न त्वकिंचित्कुर्वाण इति; एवं माषं हरमाणः, अगाधादुत्सृष्ट इति । अपि च, पयः पायं पायं, पयः पीत्वा पीत्वा, गेहमनुप्रवेशमनुप्रवेशम, गेहमनुप्रविश्यानुप्रविश्य, इत्याभीक्ष्ण्यवीप्सयोः पदाद्विर्वचनं प्रयोजयन्ति णमुलादयः, न पापच्यते, द्विशो देहीति यङ्शसादयः; लोलूयत इति द्विर्वचनमन्तरेणापि क्रियासमभिहारमवगमयति यङन्तम्, न लुनीहि लुनीहीति लोडन्तम्; कृतपूर्वी कटम्, अधीती व्याकरणम्, इति वृत्तिवशेनोज्झितकर्माभिधानशक्तयः कर्मविभक्तिं न विघ्नयन्ति निष्ठादयः; ग्रामं गन्तुमनाः, कटं कर्तुकाम इति निवृत्तिच्छिन्ना अपि कर्मणि द्वितीयामेव प्रयोजयन्ति तुमुनादयः; उभयप्राप्तौ कर्मण्येवेति नियमेऽपि विचित्रा सूत्रस्य कृतिः पाणिनेः इति, शब्दानामनुशासनमाचार्यस्य इति, समासाय कर्तरि संबन्धविभक्तिमप्युपाददते क्तिनादयः, साध्यार्थाभिधायिनोऽसत्त्वभूतार्था अपि यवाग्वाः पाकायेति कर्मणि संबन्धविभक्त्यैव संबध्यन्ते घञादय इति तदुक्तभावः साध्यसिद्धो भवति ॥

क्रियानिमित्तं कारकम्; तदपि षोढा— कर्ता, कर्म, करणम्, संप्रदानम्, अपादानम्,

अधिकरणं चेति । तत्र कर्ता— स्वतन्त्रः, हेतुः, कर्मकर्ता च; तेषु क्रियायाः स्वेच्छया करणादीनि यः प्रयुङ्क्ते न तु तैः प्रयुज्यते, स स्वतन्त्रः; यथा— पुत्रपौत्रस्य दर्शकः, पुरां भेत्तेति । तमेव क्रियाप्रवृत्तं यः प्रयुङ्क्ते स हेतुः; यथा— राजानं योधितवान् राजयुध्वा धनुष्मान्, नखानि मोचयन्ति नखमुचानि धनूंषीति । कर्मैव स्वातन्त्र्येण विवक्षितं कर्मकर्ता; यथा—स्वयमेव पच्यन्ते पचेलिमा माषाः, स्वयमेव भज्यन्ते भङ्गुराणि काष्ठानि इति । कर्म— निर्वर्त्यं, विकार्यं, प्राप्यं च; तेषु यदसज्जन्यते, सद्वा प्रकाश्यते तन्निर्वर्त्यम्; यथा— कर्तव्यः कटः, उच्चार्यः शब्दः, इति । यस्य प्रकृत्युच्छेदो गुणान्तरं वोत्पद्यते तद्विकार्यम्; यथा —भुक्त ओदनः, लूयमानः केदारः, इति । क्रियाकृतविशेषानवगतौ कर्तुः क्रिययाऽनाश्रितमाश्रितं वा यदाप्यते तत् प्राप्यम्; यथा—दुर्दर्शः प्रभुः, सुयानो मार्ग इति । करणं—बाह्यम्, आभ्यन्तरं, बाह्याभ्यन्तरं च; तेषु कर्तुः शरीराद्बहिरुपलभ्यमानं बाह्यम्; यथा—आशितंभवं भक्तम्, धूतोदकः करकः, इति । तद्विपरीतमाभ्यन्तरम्; यथा— प्रियंकरणं शीलम्, वशीकरणं प्रेम, इति । उभयगुणयोगि बाह्याभ्यन्तरम्; यथा—दर्शनं चक्षुः, संवननं साम इति । संप्रदानम्—ददातिकर्माप्यं, कर्ममात्राप्यं, क्रियाप्यं च; तेषु सम्यक् प्रदीयते अस्मै इत्यन्वर्थसंज्ञाया विषयो ददातिकर्माप्यम्; यथा— दीयतेऽस्मै दानीयो ब्राह्मणः, देवा देयासुरस्मै देवदायो डिम्भः, इति । 'कर्मणा यमभिप्रैति स संप्रदानम्' (पा. १-४-३२.) इति पारिभाषिकसंज्ञाविषयः कर्ममात्राप्यम्; यथा—दाश्यतेऽस्मै देयमिति दाशः कैवर्तः, गां हन्ति तस्मै आगतायेति गोघ्नः अतिथिः इति । कर्मशब्देन क्रियाया अप्युपादानात् क्रियया यदाप्यते तत् क्रियाप्यम्; यथा—श्लाघन्तेऽस्मै जना इति श्लाघ्यो राजा, स्पृहयन्त्यस्मै लोकाः स्पृहणीयो विभव इति । अपादानम्—निर्दिष्टविषयम्, उपात्तविषयम्, अपेक्षितक्रियं च; तत्र 'ध्रुवमपायेऽपादानम्' (पा. १-४-१४) इति निर्दिष्टविषयम्; यथा— प्रपतनो गिरिः, प्रस्रवणः शैलः, इति । भीत्रार्थादियोगोक्तमुपात्तविषयम्; यथा— भयानको द्विषताम्, प्रभवः संपदाम्, इति । अवधिमात्रार्थमपेक्षितक्रियम्; यथा— अवधिः पर्वतः, मर्यादा समुद्रः, इति । अधिकरणम्— वैषयिकम्, औपश्लेषिकम्, नैमित्तिकं च; तेषु विविधमनेकप्रकारं जातिगुणक्रियाद्रव्यादिभिः सिनोतीति विषयो देशकालादिः; विषय एव वैषयिकम्; यथा— निपिबन्त्यस्मिन् गवादय इति निपानं जलाशयः, राजानो धीयन्तेऽस्यां राजधानी नगरम् इति । उपश्लेषोऽवष्टम्भः, तस्मै प्रभवत्यौपश्लेषिकम्; यथा— इषवो धीयन्ते अस्मिन् इषुधिः उपासङ्गम्, शेरतेऽस्यां शय्या पर्यङ्कः । निमित्तमेव नैमित्तिकम्, यथा— रज्यन्तेऽस्मिन् सामाजिकमनांसि इति रङ्गः प्रेक्षा, प्रसीदन्ति अस्मिन् नयनमनांसि इति प्रासादः सौधम् इति । तदेतदुभयमपि— शुद्धम्, संकीर्णम्, उपाधिमत्, रूढिमत्, संबान्धि, अनुबान्धि चेति षोढा विप्रथते । तत्र अर्थान्तरैरसंस्पर्शः शुद्धिः; सा भावानां यथा—

ओदनस्य पाकः, अलं कृत्वा, खलु स्थित्वा, इति; कारकाणां यथा— अपां स्रष्टा, वर्षशतस्य पूरकः, सोमं पवमान इति। संपर्कः संकरः; स भावानां यथा—कालो भोक्तुम्, अलं भोक्तुम्, भोजं भोजं व्रजतीति; कारकाणां यथा—गमनमर्हति गम्या योषित्, जेतुं शक्यते जय्यः शत्रुः, पक्तुं व्रजति, पाचको व्रजतीति। बाह्यमाभ्यन्तरमुभयं वा शास्त्रोपात्तं विशेषणमुपाधिः; स भावानां यथा— भवतः शायिका, उपसरो गवाम्, समजः पशूनामिति। कारकाणां यथा— तुन्दपरिमृजोऽलसः, स्तम्बेरमो हस्ती, दृतिहरिः पशुः इति। गुणवचनत्वे द्रव्यवचनत्वरूढिः; सा भावानां यथा- मृगया, वासना, परिव्रज्येति; कारकाणां यथा—कुम्भकारः, पङ्कजम्, अमावास्येति। नियोगतः प्रतियोग्यपेक्षः संबन्धः; स भावानां यथा— भुक्त्वा व्रजति, भोक्तुमिच्छति, अप्राप्य नदीं पर्वत इति; कारकाणां यथा— चङ्क्रम्यमाणोऽधीते, अधीयानो वसति, गोदायो व्रजति। अनुषङ्गोऽनुबन्धः; स भावानां यथा— सांराविणं वर्तते, रैपोषं पुष्यति, चकासांचकार इति; कारकाणां यथा— अग्निष्टोमयाजी, उष्ट्रक्रोशशतं दायी इति। अथैतदभिधाने त्रिप्रकाराः कृतो भवन्ति— भाववचनाः, कारकवचनाः, भावकारकवचनाश्च। तेषु अथुजादयः, ण्वुलादयः, णजादयः, तुमुनादयः, सयादयः, णमुलादयश्च भाववचनाः; ण्वुलादयः, अणादयः, उणादयः, क्विनादयः, शत्रादयः, तृनादयश्च कारकवचनाः; तव्यादयः, तवायादयः, क्तादयः, खलादयः, लुडादयः, घञादयश्च भावकारकवचनाः। तत्र भाववचनेष्वनुपाधौ सिद्धभावे अथुजादयः; यथा— नन्दथुः, यज्ञः, स्वप्नः, क्रिया, कण्डूया, व्यज्या, इति। अत्रैव रोगाद्युपाधिमति ण्वुलादयः; यथा— अरोचको बाधते, प्रवाहिकातः करोति, भवत आसिका, इक्षुभक्षिकां मे धारयसि, कां त्वं कारिमकार्षीः, अकरणिस्ते वृषल, इति। सिद्धासमाप्ते णजादयः; यथा— व्यावक्रोशी वर्तते, व्यावहासीं कुर्वन्ति, साङ्कूटिनं वर्तते, सांराविणं कुर्वन्ति, करणेन निर्वृत्तं कृत्रिमम्, पाकेन निर्वृत्तं पक्त्रिमम्, इति। साध्यरूपे तुमुनादयः; यथा— भोक्तुं व्रजति, भोक्तुं जानाति, भुक्त्वा व्रजति, अपमित्य याचते, स्वादुङ्कारं भुङ्क्ते, चोरङ्कारमाक्रोशति। तुमर्थे एव छन्दोविषये सयादयः; यथा— वक्षे रायस्त्वा, दृशे विश्वाय सूर्यम्, अग्निं देवा विभाजं नाशक्नुवन्, विलुपं नाशक्नुवन्, ईश्वरोऽभिचरितोः, ईश्वरो विलिखः इति। स्वाध्यायसमाप्ते णमुलादयः; यथा— समूलकाषं कषति, रैपोषं पुष्यति, चकासांचकार, बिभराम्बभूव, चकासामास, विदांकुर्वन्तु, इति। कारकवचनेष्वनुद्रिक्तक्रियांशाः कर्तर्येव ण्वुलादयः; यथा— कारकः, स्रष्टा, नन्दनः, प्रियः, यज्वा, जरन्निति। सोपपदाः कर्त्रादिष्वणादयः; यथा— काण्डलावः, पादहारकः, सुभगंकरणम्, गोघ्नः, शंभुः, गोष्ठः, इति। निरुपपदा रूढिमन्त उणादयः; यथा— कारुः, दात्रम्, धात्री, दासः, भीष्मः, इति। उभयेऽपि लोपवन्तः क्विनादयः; यथा— घृतस्पृक्, सदृक्, अर्धभाक्, शुभंयुः, प्राङ्, युङ्, इति। कर्तर्येवोद्रिक्त-

क्रियांशाः शत्रादयः ; यथा— यवागूं पचन्, सोमं पवमानः, आशितं दाश्वान्, वेदमनूचानः, भुक्तवानोदनम्, ग्रामं गमी, इति। त एव ताच्छील्याद्युपाधिमन्तस्तृनादयः ; यथा— जागरिता-ऽपररात्राः, मुण्डयितारः श्राविष्ठायनाः, वधूमूढाम्, अलंकरिष्णुः, कतीह कवचमुद्वहमानाः, शतं दायी, एषानाहारको व्रजति, इति। भावकारकवचनेषूद्रिक्तानुद्रिक्तक्रियांशाः तव्यादयः ; यथा— कर्तव्यं भवता, करणीयं भवता, कार्यः कटो भवतः, कृत्यः कटो भवतः, वास्तव्यो भवान्, ब्रह्मभूयं भवतः, इति। त एव छन्दोविषयास्तवायादयः ; यथा—परिधातवै, परिस्तरितवै, अवचक्षे, अवगाहे, दिदृक्षेण्यः, कर्तुं हावः, इति। उद्रिक्तक्रियांशाः क्तादयः ; यथा— भुक्तं भवता, भुज्यमानं भवता, भोक्ष्यमाणं भवता, भुक्तमोदनम्, भुक्त ओदनो भवता, एवं भोक्ष्यमाणः, इति। त एव व्यक्त-कालाः खलादयः ; यथा— स्वाढ्यंभवं भवता ; सूत्थानं भवता, प्राशितंभवं भवता, दुराढ्यंभवं भवता, ईषत्पानः सोमो भवतः, आशितंभवं भक्तम्, इति। अनुद्रिक्तक्रियांशाः प्रायो गुणवचना ल्युडादयः ; यथा— व्यासस्य वचनम्, पाणिनेरुक्तिः, छात्रस्य हसितम्, इध्मानां प्रश्चनम्, जनानां भक्तिः, राज्ञां मत इति। त एव प्रायो द्रव्यवचना घञादयः ; यथा— पर्यायः क्रियाणाम्, विपर्ययः कालस्य, संग्रहः शास्त्राणाम्, अधीतः स्वाध्यायः, अधिगत उपायः, श्रेयानु-पाध्यायः इति॥

भावकारकसंबन्धिस्वार्थाभिधायिनोऽधातुप्रत्ययास्तद्धिताः। तत्र भावो द्विधा— अन्त-रङ्गः, बहिरङ्गश्चेति। तयोः शब्दस्यार्थे प्रवृत्तिनिमित्तमन्तरङ्गः, यदाह— 'यस्य गुणस्य हि भावाद्द्रव्ये शब्दनिवेशः, स तस्य भावः ; तदभिधाने त्वतलौ।' तस्योपसंग्रहाय संग्रहकारः पठति—

'शब्दे तां जातिं शब्दमेवार्थजातौ जातिः शुक्लादौ द्रव्यशब्दे गुणं तम्।
कृत्तत्संयोगं योगि चाभिन्नरूपं वाच्यं वाच्येषु त्वादयो बोधयन्ति॥'

ततः स षोढा भिद्यते— जातिः, गुणः, स्वरूपम्, संबन्धः, संहतिः, अभिन्नरूपम्, इति। तेषु जातिर्यथा— गोत्वम्, शुक्लत्वम्, मानुष्यकम्, स्त्रैणम्, पौंस्नम्, ब्राह्मण्यम्, इति। गुणो यथा— शुक्लत्वम्, शीघ्रता, म्रदिमा, माधुर्यम्, आर्जवम्, वैदग्ध्यम्, इति। स्वरूपं यथा— डित्थत्वम्, आकाशत्वम्, चन्द्रत्वम्, सूर्यत्वम्, दिक्त्वम्, तदात्वम्, इति। संबन्धो यथा— पाचकत्वम्, काण्डलावत्वम्, दण्डित्वम्, औपगवत्वम्, राजपुरुषत्वम्, पुरुषव्याघ्रत्वम्, इति। संहतिर्यथा— धवखदिरत्वम्, नरसिंहत्वम्, शुक्लकृष्णत्वम्, कृष्ण-शारत्वम्, नीलोत्पलत्वम्, गौरखादिरत्वम्, इति। अभिन्नरूपं यथा— सत्त्वम्, विद्यमानत्वम्,

ग्रैवेयाङ्गदहारकुण्डलधरामाखण्डलादिस्तुतां
मायाविन्ध्यनिवासिनीं भगवतीं ध्यायामि मूकाम्बिकाम् ॥११॥

श्रीमन्नीपवने सुरैर्मुनिगणैः सेव्यां च विद्याधरै-
र्मन्दारादिसमस्तदेवतरुभिः संशोभमानां शिवाम् ।
सौवर्णाम्बुजधारिणीं त्रिनयनामेकादिकामेश्वरीं
मूकाम्बां सकलेष्टसिद्धिफलदां वन्दे परां देवताम् ॥ १२ ॥

इति श्रीमूकाम्बास्तोत्रं संपूर्णम् ॥

---

॥ श्रीवासुदेवाय नमः ॥

# ॥ कमलास्तवकर्णरसायनम् ॥

मेधाश्री पण्डितनारायणकविशेखरेण प्रणीतम् ॥

---

## ॥ प्रथमो निष्यन्दः ॥

कंचन काञ्चनगौरं कुलशिखरिस्पर्धिकुचतटीघटितम् ।
करुणामृतरसभरितं कल्याणोल्लासकन्दमवलम्बे ॥ १ ॥

अवनतमतफलवितरणविबुधगवी वासुदेववामाक्षी ।
विभवं वितरतु विपुलं विकसितविमलारविन्दवास्तव्या ॥ २ ॥

दरहसितं द्युतिलसितं दामोदरदेहभूषणं दिव्यम् ।
दिशतु दयारसभरितं दैवतमस्माकमीप्सितं त्वरितम् ॥ ३ ॥

पौष्पेषवप्रपञ्चप्रकटनपाण्डित्यपरिणतापाङ्गैः ।
कञ्चुकितमञ्जनाभं कलयति कमलेति काचन कृशाङ्गी ॥ ४ ॥

गजराजगतिविलासं गगनतुलाकोटिरूढमितमध्यम् ।
गरुडध्वजावरोधं गङ्गाधरवन्दनीयमाकलये ॥ ५ ॥

चटुलदृगञ्चलमालं चञ्चलरुचिसंप्रदायतनुलेखम् ।
चरणाम्बुजेन शोणं चकास्तु सदने चिरंतनं वस्तु ॥ ६ ॥

आजानपूतसुलभैरार्तिहरैरद्य किंपचानानाम् ।
आनन्दमूलकन्दैरापत्ततिरपहृतेति तुष्यामः ॥ ७ ॥

वीक्षे विपुलनितम्बं विनतासुतवाहविभ्रमाधारम् ।
वारिधिवंशवतंसं वक्षोरुहवेल्लदङ्गसौभाग्यम् ॥ ८ ॥

नवनीलनीरदाभानियमननिपुणाक्षिकोणकलिताय ।
नयनामृताय महसे नमः सहस्राणि नलिननाभस्य ॥ ९ ॥

संतापमस्मदीयं भिन्तां बलिडम्बहरणसर्वस्वम् ।
संतानविटपिमणिना दन्तादन्तीहितं फलाकलने ॥ १० ॥

मन्तुं ममाब्जनिलये नन्तुः क्षन्तुं कृपाविलासान्ते ।
सन्तु सदा सुतरामिति कन्तुः संतुष्यतः स्तवेन तव ॥ ११ ॥

जाता जलनिधिजठरे शातोदर्यस्त्रपावहायेन ।
वीतोपमानमीहे भीतोऽद्याहं तमेव शरणाय ॥ १२ ॥

कालाम्भोधरकुरकैः कामकलामूलविभ्रमोदारैः ।
कारुण्यकलितहृदयैः कुशलं काश्मीरकान्तपादाब्जैः ॥ १३ ॥

वनमालिविश्वपालनविधानकरणं विभासि बहुकरुणम् ।
आपन्नखेदहरणं शरणं करवाणि कारणं जगताम् ॥ १४ ॥

कुटिलं कुन्तलपटले कृशं वलग्ने कुचद्वये कठिनम् ।
केशववक्षसि विहृतिं कुरुते कारुण्यकन्दलं किमपि ॥ १५ ॥

सुन्दरिमसान्द्रदेहं कुन्दरुचिस्पर्धमानदन्ताभम् ।
मन्दगतिमुक्तिमूलं कन्दलयत्येव किमपि कुतुकं नः ॥ १६ ॥

राकेन्दुसुन्दरास्यां लोकेशत्वप्रदानपरलीलाम् ।
लोकेय लालनीयां शोकेनाक्रुष्टचेतनः कर्हि ॥ १७ ॥

बन्धूकबन्धुपादं बलिकदनानन्दकन्दलाद्वैतम् ।
बहलं कलयतु कुशलं बन्धं भवभारसंभवं भित्त्वा ॥ १८ ॥

कर्ता कुशलचयानां भर्ता भगवान्हरिर्भवति यस्य ।
स्मर्ता यस्य च धन्यो धर्ता नः सोऽस्तु पापसंहर्ता ॥ १९ ॥

केशवकटाक्षलहरीसुषुमासमवायसारसंघटितम् ।
महितं विधिहरविनुतं ललितं कलितं मया कृपामिलितम् ॥ २० ॥

कोकनदशोणचरणां कामपि कल्याणसृतिकापाङ्गीम् ।
प्रणमामि पद्महस्तां पूरुषवरपुण्यपुञ्जपरिपाटीम् ॥ २१ ॥

निवसति निर्मलसदने निरुपमसौन्दर्यसंपदावलितम् ।
निधिनाथभाग्यबीजं निगमशिरस्तन्त्रपरमतात्पर्यम् ॥ २२ ॥

कुम्भाभिरामकुचभरसंभावितमायतेक्षणं वीक्षे ।
रम्भासमोरुसहितं जम्भारात्यवरजातजीवमयम् ॥ २३ ॥

आदृतनलिनानिवासामाम्नायान्ताब्जमध्यमधुधाराम् ।
आकाशसदृशमध्यामाशासे द्रष्टुमम्बुधेः पुत्रीम् ॥ २४ ॥

फुल्लारविन्दवदनं परिणाहिपयोधरप्रसन्नतनु ।
अद्राक्षमादिदैवतमभ्युदयं कंचिदब्जनाभस्य ॥ २५ ॥

दीने दयापरीतं मीनेक्षणमञ्जुलं महः किमपि ।
ज्ञाने जराविहीनं दाने देवद्रुकौशलविशालम् ॥ २६ ॥

करुणाविलासरङ्गं कल्याणासारकन्दलासंगम् ।
कलये कमलापाङ्गं कलितकलिन्दात्मजाप्रभाभङ्गम् ॥ २७ ॥

अधिदेहमादिपुंसः पूतात्मभिरेव वीक्षणीयेन ।
अनुबद्धं मम मानसमविरतमारुण्यधारि चरणेन ॥ २८ ॥

ईक्षणविलासिवदनामीश्वरताकरणधोरणीनिपुणाम् ।
ईडीमहि हरिदयितामीतिपरीहारपरमजीवातुम् ॥ २९ ॥

न्यस्तः समस्तभारस्त्वत्तेन मया प्रशस्तकरुणार्द्रे ।
सुस्तनकुम्भसमेते वस्तुन्यस्तोकवैभवे वन्द्ये ॥ ३० ॥

किमपि कृपाकुलमीडे किल्बिषविद्वेषवैखरीविदितम् ।
कितवकुलदृष्टिदूरं किसलयरुचिकोमलाधरस्फुरणम् ॥ ३१ ॥

नीरागमोहसुलभं धीराविशति प्रणम्रपरिपालम् ।
नारायणपरतन्त्रं वाराकरसार्वभौमसर्वस्वम् ॥ ३२ ॥

सकलसुखसारभरिते सौन्दर्यस्वरसतासमाविष्टे ।
सरसिजपदे विलीये संपन्नानन्दहेतुसाम्राज्ये ॥ ३३ ॥

रमया रम्याधरया राकाकोकारिसोदराननया ।
राजीवमध्यगतया राजेऽहं राजराजपूजितया ॥ ३४ ॥

मन्दस्मितेन मुग्धो मांसलवक्षोरुहेण च विदग्धः ।
करुणारसपरिणद्धः सिद्धः सौभाग्यसंचयो बुद्धः ॥ ३५ ॥

नीलं चिकुरप्रकरे स्थूलं स्तनयोः कटाक्षकल्लोलम् ।
मूलं मदुत्सवानामालम्बे शार्ङ्गधन्वशुद्धान्तम् ॥ ३६ ॥

कन्दर्पदर्पसंपत्कोशगृहं कुन्दमन्दहासरुचि ।
पिञ्जरतनु प्रणौमि प्रबलाकिंचन्यपरिहृतिप्रवणम् ॥ ३७ ॥

पात्री पादनतानां दात्री दामोदरप्रमोदानाम् ।
जातादरा जवेन ध्यातारं पातु काऽपि कनकाङ्गी ॥ ३८ ॥

मातङ्गमन्दगमनैर्मञ्जुलमृदुहासमुग्धमुखकमलैः ।
मदिरेक्षणैर्मनोजैर्मोदो मनसो मुकुन्दमूलधनैः ॥ ३९ ॥

वारिनिधिमध्यवसतेर्वरस्य पुंसो विभूषणं वस्तु ।
वक्षोजभारविपुलं वीक्षे वामोरुविभ्रमोदारम् ॥ ४० ॥

कौस्तुभिकौतुकमूलं कस्तूरीपङ्किलस्तनाभोगम् ।
निस्तुलसुषुमानिबिडं वस्त्वस्तु स्वस्तिकृत्सदाऽस्माकम् ॥ ४१ ॥

हीनः श्रिया ह्रियार्तो दीनः संसारसागरे मग्नः ।
ध्यानक्रमकृतहृदयो लीनः स्यां कर्हि केशवप्रेम्णि ॥ ४२ ॥

लोकेमहि लघुमध्यं लङ्कासर्वस्वलयकलामूलम् ।
ललनामाणिकुलदीपं लसदलकश्रेणिललितसौन्दर्यम् ॥ ४३ ॥

संपादयेत भद्रं शंपापर्यायदेहदीप्तिधरम् ।
कम्पाकुलनतशरणं चम्पासौरभ्यचारुचिकुरभरम् ॥ ४४ ॥

कुसुमशरकार्मुकोद्यमकारणवीक्षाविलासवल्गानम् ।
कुरुते किमपि कृपार्द्रं कञ्चुकितं केशवं कटाक्षेण ॥ ४५ ॥

कपटवटुवामनस्य व्यवस्थितं वृतविशेषवैदग्ध्यम् ।
कमलालये मनस्ते मनागपि क्षन्तुमम्ब नोत्साहि ॥ ४६ ॥

कुचकलशकोमलाङ्गे कुशलपरीणाहकारणकटाक्षे ।
कुरुते मनो विहारं कुसुमशराम्नायसारसिद्धान्ते ॥ ४७ ॥

पिञ्जरिममञ्जुलाङ्गं पुरुषोत्तमपुण्यसारसंनाहम् ।
पर्वतपीनपयोधरपरिणाहं प्रस्तवीमि पद्मगतम् ॥ ४८ ॥

लीलाविलासवलिते लोलश्यामलकटाक्षकन्दलिते ।
लावण्यामृतभरिते लीये कस्मिंश्चिदच्युताधीने ॥ ४९ ॥

अङ्कुरितमनसिजोत्सवमूलधनोरोजभारभरणेन ।
अङ्कितमुरारिदेहामाद्यामद्राक्षमापदवसाने ॥ ५० ॥

अम्भोदसदृशचिकुरं कुम्भोपमितस्तनं सुधालोकम् ।
रम्भोरु साधनीयारम्भो ध्यायानि दैवतं किमपि ॥ ५१ ॥

पृथुलं नितम्बबिम्बे चटुलं नयने पदद्वये मृदुलम् ।
पीताम्बरप्रमोहनपरंपरापट्टु पुरोऽस्तु परिपूज्यम् ॥ ५२ ॥

रक्ष्यो रमाकटाक्षै रवितनयाद्योधकोटिदायादैः ।
रमणीयतानिदानै राजपदप्रापणप्रसादकरैः ॥ ५३ ॥

पश्यामि पुण्यपुञ्जं पुराणपुरुषस्य पवित्रमं किमपि ।
पाटलिमपाकभेदं पाशवराभीतिसृणिकराम्भोजम् ॥ ५४ ॥

दारितदुर्गतिवर्गैर्दानवपरिपन्थिजीवनोपायैः ।
द्राघिष्ठदृग्विलासैर्दयया दुरितं मम द्रुतं दलितम् ॥ ५५ ॥

मुनिजनमानसवासं मुखरुचिविस्तारमुद्रिताब्जकुलम् ।
मुरमथनमहिममूलं मुहुर्मुहुर्मोदमातनोति मम ॥ ५६ ॥

दशनांशुरुचिरहासं दशवदनाटोपदुर्दशामूलम् ।
दलयतु दैवतमेतद्दरिद्रदुष्कर्मदुःखदुर्गवनीम् ॥ ५७ ॥

पद्मासनोक्तिहर्म्यं पीताम्बरपुण्यकन्दलीगम्यम् ।
तेजः किंचन रम्यं त्रायेतापूरितेष्टजनकाम्यम् ॥ ५८ ॥

तरलापाङ्गतरङ्गं तपनार्भककोटितुल्यतनुशोभम् ।
तरुणिमतुन्दिलदेहं तदब्जनाभाङ्कभूषणं वन्दे ॥ ५९ ॥

नेदिष्ठमाश्रितानां व्यादिष्टं वीक्षणास्थया विपुलम् ।
आदित्यशावकाभं स्वादिष्ठं स्वीकरोतु तत्कवनम् ॥ ६० ॥

नारायणीयमानसनियन्त्रणं नियतमेव विदधाति ।
नयनाञ्चलेन काचिन्नालिमसर्वस्वसंप्रदायेन ॥ ६१ ॥

कमलनिलयां कराञ्चितकमलां कमलसमवदनकमनीयाम् ।
कमलशरजयपताकां कमलां कलयामि कमलनाभसखीम् ॥ ६२ ॥

कनकरुचिभासमानं कञ्चुकिताहिशयपुण्यभूमानम् ।
कंचन गुरुमहिमानं कलये गलिताभिमानबहुमानम् ॥ ६३ ॥

तारेशतुल्यवदनं ताम्राधरबिम्बतरलतारुण्यम् ।
तानवरुचिरमणीयं तापहरं भाति तत्किमपि तेजः ॥ ६४ ॥

क्रीतं मनो मदीयं कठिनस्तनभारकन्दलितकार्यैः ।
कम्बुसहोदरकण्ठैः कैरविणीकामुकाननैः कैश्चित् ॥ ६५ ॥

ऊरीकरोमि हृदये दूरीकरणक्षमां क्षणेनार्तेः ।
स्फारीभूतदयार्द्रां वारीश्वरनन्दिनीं वरारोहाम् ॥ ६६ ॥

वक्षःस्थलीविहारैर्वाक्पदवीदूरवैभवविशालैः ।
विद्युल्लतासमाङ्गैर्वन्द्यैर्वातायुवीक्षणैर्विवशः ॥ ६७ ॥

पाटलिमपिञ्जराणां पीयूषासारपूर्णदृष्टीनाम् ।
पङ्केरुहालयानां प्रणतः पादाब्जयोः पुराणानाम् ॥ ६८ ॥

भगवदुरोगृहगतया भासा भ्रूवल्लिचापभासुरया ।
भर्मसमाङ्गप्रभया भवति सदा भद्रमेव भक्तानाम् ॥ ६९ ॥

जल्पाकतामवाप्तस्तल्पायितशेषसुन्दरीस्तवने ।
अल्पां गिरं मदीयां कल्पावधि कविजनः कटाक्षयतु ॥ ७० ॥

कलशाम्भोनिधिमध्ये कल्पद्रुमकानने मणीखचिते ।
मण्डपवरे मणिद्युतिमञ्जुळसिंहासने मणिप्रचुरे ॥ ७१ ॥

चामीकराम्बुजन्मनि चिरं स्थितां चिन्तयेऽच्युतप्रमदाम् ।
चटुलनयनां चराचरजननीं चक्रकुचकुम्भकमनीयाम् ॥ ७२ ॥

नारायणाङ्कनिलयां नीलिमसमवायसारकचभाराम् ।
सौदामिनीसमाभां सागरसौभाग्यवैखरीवल्लीम् ॥ ७३ ॥



Sri Sankara decked as Sri Raja Rajesvari on the Sarasvati Puja day of the Navaratri Festival at the Sri Sankaragurukulam, Srirangam



The Journal
OF THE
Sri Sankaragurukulam
Srirangam

VOL. II. NO. 6.

# PROBLEMS OF IDENTITY— MANDANA MISRA-SURESVARA.

*By Vidyasagara Vidyavacaspati* P P SUBRAHMANYA SASTRI B.A. (OXON), M.A., *Professor of Sanskrit, & Comparative Philology, Presidency College, and Curator, Government Oriental Mss Library, Madras.*

In his learned introduction to the Brahmasiddhi of Mandana Misra published in the Madras Government Oriental Mss. Library Series, Mahamahopadhyaya Professor S, Kuppuswami Sastriar has argued in detail that (1) Mandana Misra, the author of Brahma Siddhi is not identical with Suresvara, the author of the Naiskarmya Siddhi and Brhadaranyaka vartika and (2) the Grhasthasrama name of the Sannyasin, Suresvara, is Visvarupa and not Mandana Misra. We have, in this connection, examined the more important Sankara Vijayas that are available in print or in manuscript (For List see end of the article). From the point of view of the narration of the major incidents in Sri Sankaracarya's life these Sankaravijayas fall into two main currents :—

(1) that represented by Cidvilasa, Anantanandagiri and Vallisahaya, and (2) the other represented by Vyasachala, Rajacudamani, Kasi Laksmana Sastri (author of the Guruvamsa), Govindanatha, and Madhava, the pupil of Mahesvara (but who generally is mistakenly identified with the famous Vidyaranya and who refers to himself as Navakalidasa).

1, Cidvilasa, the author of Sankara

Vijaya Vilasa, belongs to the circle of pupils who gathered round Sankara during his life-time. His work is in the form of a dialogue between himself and his pupil Vijnanakanda, both of whom are referred to as pupils of Sankara by Anantanandagiri and Vallisahaya as well. The colophons appended to the printed edition of Cidvilasa's work (which agree with the India Office Mss.) also make out Cidvilasa as belonging to the circle of pupils Sankara had during his life-time. The work must have been composed after Sankara's death. The work bears distinct marks of a genuine biography by a devoted pupil and nothing historically inconsistent or repugnant from any other point of view is contained in the work. The main features of the work are (1) the investing with the sacred thread (Upanayana) of Sankara by his own father, (2) Kumarila's request to Sankara to meet his pupil Mandana Misra in Kashmir. (3) Mandana Misra's wife is styled Rasavani and not Ubhayabharati, (4) Sankara's compelling Rasavani also to hold a dialogue with him to make her give him the title of Sarvajna, (5) the establishment of Kamaksi and Sri Cakra at Kanci and the ascension of Sarvajna pitha at Kanci after defeating all oppositionists, (6) the starting of the Digvijaya from Kanci ending it at Badarikasrama from where he left off the mundane plane in the company of Dattatreya.

Cidvilasa mentions the meeting of Sankara and Mandana Misra at Kashmir and states the defeat of Mandana and his consequential assumption of Sannyasa in the following terms:—(Ch. 18, Sl. 45 & 46)

एवं वदति विप्रेन्द्रे तद्वचस्तुष्टमानसः ।
ददौ मण्डनमिश्राय संन्यासं जितरेतसे ॥

सुरज्येष्ठांशजातत्वाज्ज्ञाततत्त्वाच्च देशिकः ।
सुरेश्वराचार्य इति मुदाऽभिख्यामदात्तदा ॥

It is thus clear that as far as Cidvilasa is concerned, Suresvaracarya's grhastha name is Mandana Misra.

2. Anantanandagiri, who quotes (Pr. 47) from Vidyaranya's Adhikaranamala and as such must be later than the 14th century, agrees in the main with Cidvilasa and describes in detail Sankara's meeting with Mandana Misra in Prakarana 55 and the following. Anantanandagiri also definitely states Mandana Misra as the grhastha name, Rasavani the name of Mandana Misra's wife and Suresvara as the Sannyasa name. In all these respects Vallisahava (Circa 1770 A. D.) agrees with Anantanandagiri and Cidvilasa. All these three writers do not make any mention of Suresvara's Grhastha name as Visvarupa, nor do they refer to him as Visvarupa in any context.

(3) Vyasacala, the 54th Pontiff, who occupied the Kanci Pitha from 1497-1506 is chronologically probably the third writer of a Sankara Vijaya. He is referred to as "व्यासाचलीयादिप्रबन्धकृत्" in the Punyaslokamanjari composed by Sarvajna

Sadasiva who was Pontiff at Kanci from 1523 to 1539 A. D. The chief points of difference in Vyasacala's work are—(1) the demise of Sankara's father before he could perform his son's Upanayana, (2) Kumarila's request to Sankara to meet his pupil Visvarupa in Magadha, (3) Visvarupa's wife is styled Ubhayabharati and not Rasavani, (4) Ubhayabharati goes back to her own regions without any further dialogue with Sankara (5) the ascension of Sarvajna pitha by Sankara at Kashmir and not at Kanci According to Vyasacala, Visvarupa is the name assigned to Suresvara. Vyasacala is the first writer who has started this identification, and he does not mention Suresvara as the Sannyasa name. Curiously enough, Vyasacala in the same breath also mentions a Mandana Misra, a Grhastha, whom Sankara met as soon as he came out of Kumarila's house, and whom Sankara could not convince of the wisdom of becoming a Sannyasin to attain salvation. Evidently, here is a confusion.

(4) Rajacudamani Diksita who composed his Tantrasikhamani in 1637 A. D. has also written a poem on Sankaracarya styled Sankarabhyudaya. It is a work in 6 (?) sargas, dealing with the various incidents in Sankara's life. The Diksita agrees in the main with Vyasacala and states that Sankara conferred the title Suresvara on Visvarupa for writing the Naishkarmya Siddhi. He is not aware of a grhastha Mandanamisra who met Sankaracarya. But he has a thoroughly original version of the mode by which the great Sankara acquired his proficiency in Erotics It was neither as a result of his controversy with Visvarupa's wife nor with the Goddess Sarada at Kashmir prior to his ascension of the Sarvajnapitha there The occasion was, whilst he was walking in the forests adjoining the Mukambika Ksetra near Gokarna, in the company of Sanandana, when he happened to see the dead body of King Amaruka lying on the ground near a tree The idea struck him that he might as well enter the body and learn the science of Love in a day or two. In spite of Sanandana's protest, he did enter the body and left it after two days, approaching Sanandana with the centum of verses he had in the meanwhile composed. The origin of the Amaruka Sataka is thus particularly original with Rajacudamani Diksita.

(5) Kasi Laksmana Sastri, the author of the Guruvamsa was a contemporary of Saccidananda Bharati who was the 26th Pontiff at Sringeri from 1705 to 1741. The Sastri pays his homage to Anandagiri and quotes from the Sankarabhyudaya and mentions Visvarupa. He refers to him as Suresvara when Visvarupa is installed at Sringeri. But he retains the story of the meeting of Sankara and a Grhastha Mandanamisra before Sankara met Visvarupa. Evidently in this, he was following the footsteps of Vyasacala,

preferring the confusion in all its details.

(6) Govindanatha a native of Kerala is the next writer on Sankara His Sankaracaryacaritra is in nine chapters. He pays his homage to Vyasacala and quotes Cidvilasa also. He follows Vyasacala in the main and mentions Visvarupa. He, however, mentions Visvarupa's wife's name as Vani and not as Ubhaya bharati, agreeing in this with Cidvilasa. No mention is made of a Grhastha Mandanamisra nor Suresvara as a Sannyasa name. He may be assigned to the sixteenth century as he appears to follow Guruvamsa also here and there.

(7) Vallisahaya of the Vadhula gotra is the next writer on Sankara. He was a contemporary of Abhinava Narasimha Bharati, the 28th Pontiff at Srngeri from 1767 to 1770. He is the author of the Acarya Digvijaya-Campu in 7 (?) Kolahalas. He pays his homage to Anandagiri and Vidyasankara and follows in the main the Cidvilasa-Anandagiri version He mentions distinctly Mandanamisra as the grhastha name of Suresvara and Sarasavani as Mandanamisra's wife's name. He is not aware of any one by the name of Visvarupa. The Manuscript is incomplete and breaks off abruptly after narrating the visit of Sankara to Kanci.

(8) The close of the 18th century probably saw the composition of the most popular history of Sankara called the Samksepasankaravijaya otherwise known as Madhaviya, composed in 16 cantos. It has been usual to identify the author Madhava, with the famous Vidyaranya who was Pontiff at Srngeri from 1381 to 1386 A. D. This is an impossible identification as Madhava pays homage to Vyasacala of the sixteenth century and quotes wholesale from Rajacudamani Diksita of the seventeenth century Besides, he is also familiar with the Visvarupa Mandanamisra confusion and offers the solution in unmistakable terms that Mandanamisra, Visvarupa and Suresvara are all identical and goes so far as to include the names of Bhavabhuti and Umveka also in the chain of identity !!!

The manuscripts of the Samksepa Sankara Vijaya available at the Madras Government Oriental Manuscripts Library and the Adyar and the Tanjore Libraries have two additional slokas in the beginning after the first sloka and these two are omitted in the printed edition From these slokas, we learn that the teacher of Madhava was one Mahesvara who certainly is not known as Vidyaranya's teacher.

From the above it will be clear that Suresvara's grhastha name was Mandanamisra according to earlier versions and that a confusion arose in the sixteenth century due to Vyasacala's confusion of Visvarupa and Mandanamisra. And it is interesting to note that the Visvarupa of Vyasacala is depicted by Vyasacala as the author of many works in Nyaya etc.,

विसृज्य सा कन्दुकखेलनं तदा
विहाय लीलाविहगोपलालनम् ।
सखीसहालापमपास्य चान्वहं
मुनेरभूत्तस्य निदेशकारिणी ॥ ३५ ॥

विसृज्येति । सा पृथा तदा तस्मिन् काले कन्दुकैः वस्त्रखण्डकृतपिण्डैः खेलनं क्रीडां विसृज्य त्यक्त्वा विहायसि आकाशे गच्छन्तीति विहगाः पक्षिणः । 'विहायसो विहश्च' इति डप्रत्ययः, विहादेशश्च । लीलाविहगानां क्रीडापक्षिणामुपलालनमुपसान्त्वनं विहाय विमुच्य सखीभिः सहालापं संभाषणम् अपास्य त्यक्त्वा अहन्यहनि अन्वहं प्रतिदिनम् 'अनश्च' 'नपुंसकादन्यतरस्याम्' इत्यव्ययीभावे टच्प्रत्ययः । तस्य मुनेर्दुर्वाससः निदेशकारिणी नियोगकारिण्यभूत् ॥ ३५ ॥

सकृद्वयस्यास्तनपत्रवल्लरी-
विलेखनेनापि नितान्तखेदिनी ।
स यद्यदाज्ञापयति स्म दुष्करं
क्षणेन तत्तन्निरवर्तयत्पृथा ॥ ३६ ॥

सकृदिति । सकृदेकवारं वयसा तुल्या वयस्या सखी 'नौवयोधर्म' इत्यादिना तुल्यार्थे यत्प्रत्ययः । 'आलिः सखी वयस्या च' इत्यमरः । तस्याः स्तनयोः कुचयोः पत्रवल्लरीणां पत्रलतानां विलेखनेन विन्यासेनापि नितान्तं खेदिनी खेदवती पृथा कुन्ती कर्त्री दुर्वासाः दुष्करं कर्तुमशक्यं यद्यत्कर्माज्ञापयति स्म समाज्ञापितवान् तत्तत्कर्म क्षणेन निरवर्तयत् निर्वर्तितवती निष्पादितवतीत्यर्थः । 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति वर्ततेः ण्यन्तात्परस्मैपदम् ॥ ३६ ॥

स कन्यकासद्मनि वत्सरं स्थितो
निजं यियासुर्निरपायमाश्रमम्[1] ।
नृपात्मजायै परिचर्यया परं
प्रसेदिवान्मन्त्रमुपादिशन्मुनिः ॥ ३७ ॥

1. ॰मास्पदम्

स इति । स मुनिर्दुर्वासाः कन्यकासद्मनि पृथागृहे वत्सरं वर्षम् । अत्यन्तसंयोगे द्वितीया । स्थितः सन् निरपायं निरत्ययं निजं आश्रमं तपोवनम् । आस्पदमिति वा पाठः । यातुमिच्छुर्यियासुः सन् । यातेः सन्नन्तादुप्रत्ययः । परिचर्यया शुश्रूषया प्रसेदिवान् प्रसन्नः सन् नृपात्मजायै पृथायै परमुत्कृष्टं सकृज्जपमात्रेण फलदो जप्यो मन्त्रस्तमुपादिशत् उपदिष्टवान् ॥ ३७ ॥

अनेन मन्त्रेण शुभे शुभंयुना
सुरेषु यं यं प्रियमाह्वयिष्यसि[1] ।
सुतं स्वतुल्यं स स दास्यतीति तां
स तोषयित्वा सहसा तिरोदधे ॥ ३८ ॥

अनेनेति । हे शुभे ! शुभंयुना शुभान्वितेनानेन मन्त्रेण सुरेषु देवेषु मध्ये प्रियमिष्टं यं यं सुरमाह्वयिष्यसि । आह्वयतेः 'आतश्चोपसर्गे' इत्यङ्, आह्वा अस्यास्तीत्याह्वः । अर्श आदित्वादच् । आह्वं करिष्यसि आह्वास्यसीत्यर्थः । आह्वशब्दात्तत्करोतीति ण्यन्तात् लट् । अन्यथा अण्यन्ते आह्वास्यसीति स्यात् । ण्यन्ते आह्वयिष्यसीति प्रकृत्यन्तरं तु दुर्निरूपम् । तस्मात् सुबधातुरेव । स स देवः 'नित्यवीप्सयोः' इत्युभयत्र वीप्सायां द्विर्वचनम् । स्वतुल्यं स्वसमं सुतं दास्यति । अनेन प्रकारेण स दुर्वासाः तां पृथां तोषयित्वा नन्दयित्वा सहसा तिरोदधे अन्तर्दधौ । कर्तरि लिट् ॥ ३८ ॥

गते तु दुर्वाससि जातु यादवी
परीक्षितुं मन्त्रमुपात्तकौतुका ।
अहर्मुखे हर्म्यगताऽमुना रहः
समाजुहावोदयपाटलं रविम् ॥ ३९ ॥

गत इति । दुर्वाससि मुनौ गते तु गते सत्येव । 'तु स्याद्भेदेऽवधारणे' इत्यमरः । यदोर्गोत्रापत्यं स्त्री यादवी पृथा जातु कदाचित् मन्त्रं परीक्षितुं मन्त्रः समीचीनो न वेति परिज्ञातुमित्यर्थः । उपात्तकौतुका प्राप्तकुतूहला सती हर्म्यगता सौधवर्तिनी । 'द्वितीया श्रित' इत्यादिना द्वितीयासमासः । 'सौधोऽस्त्री राजसदनम्' इत्यमरः । उदये उदयकाले पाटलं रक्तवर्णम् । 'श्वेतरक्तस्तु पाटलः' इत्यमरः । रविं सूर्यं रहः एकान्ते समाजुहाव आहूतवती । ह्वयतेर्लिटि 'अभ्य-

1. प्रियमाह्वये: स्वयम्

स्तस्य च' इति सम्प्रसारणे द्विर्वचने च कृते सम्प्रसारणपरपूर्वत्वस्य च परस्यादिवद्भावात् 'आत औ णलः' इत्यौकाराभावः ॥ ३९ ॥

स पीतवासाः कवची सकुण्डलः
किरीटवान्हारधरो धृताङ्गदः ।
उपागतस्तां विकसन्मुखाम्बुजां
करैः समालम्बत पद्मिनीमिव ॥ ४० ॥

स इति । पीतानि पीतवर्णानि वासांसि यस्य स तथोक्तः । कवची कवचवान् । कुण्डलाभ्यां कर्णाभरणाभ्यां सह वर्तत इति सकुण्डलः । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । 'वोपसर्जनस्य' इति सहशब्दस्य सभावः । किरीटमस्य न् किरीटयुक्तः । धरतीति धरः, पचाद्यच् ; हाराणां मुक्तावलीनां धरः । 'मुक्तावल्यां हरणे हारे' इति रत्नमालायाम् । धृते अङ्गदे केयूरे येन स तथोक्तः । स रविरुपागतः उदितः सन् विकसन्मुखाम्बुजं मुखकमलं यस्यास्तां तथोक्तां पृथाम्, पद्मिनीं कमलिनीमिव करैः हस्तैः किरणैश्च । 'बलिहस्तांशवः कराः' इत्यमरः । समालम्बत समाललम्बे ॥ ४० ॥

दिनेश कन्याऽस्मि पितुर्वशंवदा[1]
त्वमेव धर्मं[2] ननु वेत्सि मुञ्च माम् ।
इति ब्रुवाणां सुदृशं स वेपिनीं
जगाद रोषादिव रोचिषां पतिः ॥ ४१ ॥

दिनेशेति । हे दिनेश हे दिवाकर । पितुर्जनकस्य वशंवदा वशवर्तिनी । 'प्रियवशे वदः खच्' । 'अरुर्द्विषत्' इति मुम् । अहं कन्याऽस्मि । त्वमेव धर्ममाचारम् । 'धर्माः पुण्ययमन्यायस्वभावाचारसोमपाः' इत्यमरः । वेत्सि ननु जानास्येव । मां मुञ्च । 'उपगच्छेन्न वृद्धां स्त्रीं न कन्यां च कदाचन' इति स्मरणादिति भावः । इत्येवं ब्रुवाणां वदन्तीं कन्यां वेपिनीं कम्पितवतीम् ग्रह्यादित्वादिनिः । सुदृशं पृथां स रोचिषां पतिः भास्करः रोषात् कोपादिव जगाद ॥

अनादृतच्छायमिहागतं जनं
वरोरु न प्रीणयितुं यदीच्छसि ।

1 वशंगताः 2. सर्वं

करोमि [1]तावत्तव मन्त्रदायिनं
मदीयशापोरगवेष्टितं मुनिम् ॥ ४२ ॥

अनादृतेति । वरौ श्रेष्ठावूरू यस्यास्तस्याः संबुद्धिः वरोरु वामोरु । अत्र नदीसंज्ञाभावात् ह्रस्वश्चिन्त्यः । यद्वा 'अप्राणिजातेः' इति ऊङि नदीसंज्ञायां ह्रस्वत्वम् । अथवा 'संज्ञापूर्वको विधिरनित्यः इति न्यायात् 'संबुद्धौ च' इति गुणाभावः । अनादृता अगणिता छाया मत्प्रिया येन तत्तथोक्तम् । 'छाया सूर्यप्रिया कान्तिः' इत्यमरः । इहागतं जनं मां प्रीणयितुं तोषयितुं नेच्छसि यदि तव मन्त्रदायिनं मन्त्रप्रदातारं मुनिं तावत् तपस्विनमेव 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः । उरसा गच्छतीत्युरगः 'सर्पः उरसो लोपश्च' इति डप्रत्ययः सकारलोपश्च । मदीयो मत्संबन्धी यः शापः स एवोरगः तेन वेष्टितं बद्धं करोमि । तव मन्त्रदायिनं शपामीत्यर्थः ॥ ४२ ॥

करोषि चेत्काङ्क्षितमूढतेजसं
यथादितिर्मां प्रसविष्यसे सुतम् ।
मम प्रभावादखिलामरात्मनो
न कन्यकाभावमिमं च हास्यसि ॥ ४३ ॥

करोषीति । हे वरोरु । काङ्क्षितं मम मनोरथम् । 'नपुंसके भावे क्तः' । करोषि विदधासि चेत्तर्हि ऊढतेजसं भृतवर्चसं सुतं पुत्रम् । अदितिः देवमाता । 'अथादितिः उमा भूर्देवमाता च' इति रत्नमालायाम् । मां यथा मामिव । 'इववद्वायथाशब्दाः' इति दण्डी । प्रसविष्यसे जनयिष्यसि । प्रपूर्वात् सूतेः सूयतेर्वा लृटि 'स्वरतिसूतिसूयतिधूञूदितो वा' इति वैकल्पिक इडागमः । त्वदीप्सितं करिष्यामीति चेत् मम कन्यात्वहानिर्भविष्यतीत्यत्राह— ममेति । अखिलामरात्मनः सर्वदेवमयस्य मम प्रभावात् सामर्थ्यादिमं वर्तमानं कन्यकाभावं कन्यात्वं च न हास्यसि न मोक्ष्यसि । जहातेर्लृट् । प्रभावादित्यत्र प्रकृष्टो भावः प्रभाव इति घञन्तेन प्रादिसमासः । न तूपसृष्टात् घञ्प्रत्ययः, 'श्रिणीभुवोऽनुपसर्गे' इति अनुपसर्गे भवतेर्घञ्विधानात् । अत एव काशिकायाम्— कथं प्रभावो राज्ञाम् ? प्रकृष्टो भावः प्रभाव इति प्रादिसमास इति चोद्यपरिहारौ ॥ ४३ ॥

नतेन लज्जास्मितगर्भितेन तां
मुखेन क्लृप्तानुमतिं विजिज्ञिवान् ।

1. यावत्तव

प्रभामिवादाय पतिस्त्विषां ततो
शरद्घनाभं शयनीयमासदत् ॥ ४४ ॥

नतेनेति । ततोऽनन्तरं त्विषां पतिः सूर्यः तां पृथां नतेन नम्रेण लज्जास्मिताभ्यां गर्भितेन संजातगर्भेण लज्जाहासयुक्तेनेत्यर्थः । तारकादित्वादितच्प्रत्ययः । मुखेन कल्पानुमतिं कृताभ्यनुज्ञां विजिज्ञिवान् विज्ञातवान् । जानातेर्लिटः क्वसुः । प्रभां छायामिव आदाय गृहीत्वा शरद्घनाभं शरत्कालमेघनिभम्; अतिधवलमित्यर्थः । शयनीयं शय्यामासदत् प्राप्तवान् । सदेर्लुङि लृदित्वात् च्लेरङ् ॥ ४४ ॥

अनुप्रवेशादयमात्मतेजसः
शिखामिवाग्नेरधिकोज्ज्वलाकृतिम् ।
दृशा प्रसादामृतवृष्टिगर्भया
त्रिमूर्तिरापृच्छ्य पृथां तिरोदधे ॥ ४५ ॥

अनुप्रवेशादिति । त्रिमूर्तिः ब्रह्मविष्णुरुद्रमूर्तिः अयं सूर्यः आत्मतेजसः स्वतेजसः अनुप्रवेशाद्धेतोः अग्नेः शिखां ज्वालामिव। अग्नेरपि सूर्यतेजोनुप्रवेशः श्रुतिप्रसिद्धः—'अग्निमादित्यः सायं प्रविशति' इति । अधिकं यथा भवति तथा उज्ज्वलाकृतिं देदीप्यमानदेहाम् । 'आकृतिर्देहसामान्यच्छन्दोरूपेषु' इति रत्नमालायाम् । पृथां कुन्तीं प्रसादोऽनुग्रह एव अमृतवृष्टिः पीयूषवर्षं गर्भे अभ्यन्तरे यस्यास्तया दृशा दृष्ट्या आपृच्छ्य नेत्रसंज्ञया आमन्त्र्येत्यर्थः। तिरोदधे अन्तर्दधौ । कर्तरि लिट् ॥ ४५ ॥

अथेप्सितार्थप्रतिपादनार्हता-
मुपेयिवांसं सुरभर्तुरर्थिनः ।
असूत चिन्तामणिमूढतेजसं[1]
समुद्रवेलेव नृपात्मजा सुतम् ॥ ४६ ॥

अथेति । अथ सूर्यतिरोधानानन्तरं नृपात्मजा कुन्ती अर्थिनो याचकस्य सुरभर्तुरिन्द्रस्य ईप्सितार्थप्रतिपादनार्हतां वाञ्छितवस्तुवितरणयोग्यत्वम् उपेयिवांसं प्राप्तवन्तम् अत्युदारमित्यर्थः ।

---

1. ॰मूढचेतसं

'उपेयिवाननाश्वाननूचानश्च' इति क्वसुप्रत्ययान्तो निपातः। ऊढतेजसं संभृतवर्चसम्। ऊढचेतसमिति वा पाठः। सुतं पुत्रं समुद्रवेला अब्धितीरस्थली अब्धिवारिवृद्धिर्वा। 'वेलाऽब्धितीराभिवृद्ध्योः' इति रत्नमालायाम्। चिन्तामणिं मणिविशेषमिव। असूत जनयति स्म। सूतेरादादिकस्य लङि रूपम्। चिन्तामणिरपि वाञ्छितार्थप्रद इति प्रसिद्धिः ॥ ४३ ॥

निधाय तं तत्क्षण एव पेटके
यथोरगं कुण्डलकञ्चुकोज्ज्वलम्।
सुरस्रवन्त्यामपवादशङ्किता[1]
सखीभिराप्ताभिरसावमोचयत् ॥ ४७ ॥

निधायेति। असौ कुन्ती तत्क्षणे तस्मिन् क्षण एव कुण्डलाभ्यां कञ्चुकेन वर्मणा च सहजैरित्यर्थः। उज्ज्वलं प्रकाशमानं तं पुत्रं कुण्डलकञ्चुकाभ्यां कुण्डलाकारनिर्मोकाभ्याम् उज्ज्वलमुरगं यथा सर्पमिव पेटके मञ्जूषायाम्। 'पिटकः पेटकः पेटो मञ्जूषा' इत्यमरः। निधाय निक्षिप्य अपवादात् लोकगर्हणात् शङ्किता भीता सती आप्ताभिरिष्टाभिः स्वरहस्यवेदिनीभिरित्यर्थः। सखीभिर्वयस्याभिः सुरस्रवन्त्यां गङ्गायाममोचयत् मोचयति स्म। अपवादशङ्कयेति वा पाठः। मुचेर्हेतुमण्ण्यन्ताल्लङ् ॥ ४७ ॥

क्रमेण मञ्जूषिकया धृतं तया
शिशुं हरेः पञ्जरवर्तिनं यथा।
तरङ्गडोलाशतलालितं शनै-
र्निनाय तं सूतपुरान्तिकं नदी ॥ ४८ ॥

क्रमेणेति। नदी गङ्गा क्रमेण पर्यायेण अल्पा मञ्जूषा मञ्जूषिका। अल्पार्थे कप्रत्ययः। 'प्रत्ययस्थात्' इत्यादिना इकारः। तया मञ्जूषिकया पेट्या धृतमूढं तरङ्गा एव डोलाः प्रेङ्खोलिकाः तासां शतेन लालितं चालितं तं कुन्तीपुत्रं पञ्जरवर्तिनं पञ्जरस्थ हरेः केसरिणः। 'हर्यक्षः केसरी हरी' इत्यमरः। शिशुं यथा शावमिव सूतस्य अधिरथनाम्नो रथकारस्य पुरान्तिकं नगरसमीपं शनैः निनाय प्रापितवती। 'नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च। द्विकर्मकेषु ग्रहणम्' इति नयतेर्द्विकर्मकत्वम् ॥ ४८ ॥

---

1. •शङ्कया

यदृच्छया तत्र विहर्तुमागतौ
[1]विलोकितौ सादरमंशुमालिनः ।
कुमारमुद्घाटितपेटकाहृतं
निरीक्ष्य राधाधिरथौ ननन्दतुः ॥ ४९ ॥

यदृच्छयेति । तत्र गङ्गायां विहर्तुं क्रीडितुं यदृच्छया स्वेच्छया आगतौ 'स्वेच्छायदृच्छास्वच्छन्दस्वैराचरिताः समाः' इति प्रतापमार्तण्डः । विलोकितौ विलोकनमनयोरस्तीति विलोकितौ । पेटकं दर्शितवन्तावित्यर्थः । अर्श आदित्वादच्प्रत्ययः । अथवा कर्तरि कर्मधर्मोपचाराद्विलोकितपेटकौ विलोकितावित्युच्यते । उभयत्रापि पीता गावो, भुक्ता ब्राह्मणा इत्यादिवत्साधुत्वम् । न तु कर्तरि क्तः, सकर्मकेभ्यस्तस्य विधानाभावात् । अत एव भाष्यकारः 'अकारो मत्वर्थीयः विभक्तमेषामस्तीति विभक्ताः पीतमेषामस्तीति पीताः इति । उत्तरपदलोपोऽत्र द्रष्टव्यः । विभक्तधना विभक्ताः पीतोदकाः पीताः । अत्र लोपशब्दार्थमाह कैयटः— गम्यमानार्थस्याप्रयोग एव लोपोऽभिमतः । विभक्ता भ्रातर इत्यत्र धनस्य यद्विभक्तत्वं तद्भ्रातृषूपचर्यते । पीता गाव इत्यत्रापि उदकस्य पीतत्वं गोष्वारोप्यते तद्वदत्रापि पेटकगतं विलोकितत्वं विलोकयित्रो राधाधिरथयोरुपचर्यते । अथवा विलोकितौ विलोकितवन्तौ । सकर्मकादप्यविवक्षिते कर्मणि कर्तरि क्तः । यथा आसितः कर्तेत्यादौ । यथाहुः— 'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥' इति । विलोक्य तामिति पाठे तां पेटिकां विलोक्येत्यन्वयः । राधा चाधिरथश्च राधाधिरथौ राधाधिरथनामानौ दम्पती उद्घाटितपेटकादुद्भिन्नपेटकादाहृतमानीतम् अंशुमालाऽस्यास्तीत्यंशुमाली । व्रीह्यादित्वादिनिः । तस्यांशुमालिनः सूर्यस्य कुमारं पुत्रं आदरेण सहितं यथा भवति तथा निरीक्ष्य ननन्दतुः हृष्टवन्तौ ॥ ४९ ॥

ततः स ताभ्यां प्रमदेन वर्धितो
जगत्सु राधेय इति प्रथां गतः ।
क्रमेण कर्णो जमदग्निसूनुना
व्यनीयतास्त्रे विनयादुपागतः[2] ॥ ५० ॥

तत इति । ततोऽनन्तरम् । ताभ्यां राधाधिरथाभ्यां प्रमदेन प्रहर्षेण । 'प्रमदसंमदौ हर्षे' इति निपातनात्साधुः । वर्धितः पोषितः सन् जगत्सु लोकेषु राधाया अपत्यं पुमान् राधेयः ।

1. विलोक्य तां महाद्युतिं 2. ०दुपस्थितः

स्त्रीभ्यो ढक्। 'राधा कर्णस्योपमाता विशाखा गोपिका तदिति' इति रत्नमालायाम्। राधेय इति प्रथां ख्यातिं गतः अवाप्तः स कर्णः कौन्तेयः राधेयापरपर्यायः कर्णशब्दः। 'श्रोत्रकौन्तेययोः कर्णः' इति रत्नमालायाम्। क्रमेण कालक्रमेण विनयात् प्रश्रयादुपागतः सन्। उपस्थित इति वा पाठः। जमदग्निसूनुना परशुरामेणास्त्रे आयुधविषये धनुर्विद्याविषय इत्यर्थः। व्यनीयत शिक्षितः। जामदग्न्यादधीताखिलचापनिगमोऽभूदित्यर्थः। विपूर्वान्नयतेः कर्मणि लङ्॥ ५० ॥

अथावृणीताविगणय्य भूपतीन्
पृथा पतिं पाण्डुमसौ स्वयंवरे।
सुजातमैरावतमन्तरेण किं
कटाक्षयत्यभ्रमुरन्यहस्तिनः॥ ५१ ॥

अथेति। अथ असौ पृथा कुन्ती स्वयंवरे भूपतीन् नृपालान् अविगणय्य अनादृत्य, 'ल्यपि लघुपूर्वात्' इति णेरयादेशः। पाण्डुमम्बालिकासुतं पतिं भर्तारं अवृणीत वृतवती। वृतेः क्रियादिक लङ् 'ई हल्यघोः' इतीत्वम्। तथाहि— अभ्रमुः करिणी शोभनं जातं जन्म यस्य तं सुजातं सुन्दरमित्यर्थः। इराः आपः अस्मिन् सन्तीति इरावान् समुद्रः। 'इरा भूवाक्सुराप्सु स्यात्' इत्यमरः। इरावतीभवः ऐरावतः। 'तत्र भवः' इत्यण्प्रत्ययः। तमैरावतमन्तरेण इन्द्रगजं वर्जयित्वेत्यर्थः। 'अन्तरान्तरेण युक्ते' इति द्वितीया। 'पृथग्विनान्तरेणर्ते हिरुङ्नाना च वर्जने' इत्यमरः। अन्यहस्तिनः इतरगजान् कटाक्षयते किं पश्यति किं। पतित्वेन स्वीकरोति किमिति यावत्। अन्यगजान् न कटाक्षयत्येवेत्यर्थः। कटाक्षयतेस्तत्करोतीति प्रकरणे कर्तुः करणार्थ इति ण्यन्ताल्लट्॥ ५१ ॥

समुद्रगायास्तनयेन धन्विना
जयश्रियं मूर्तिमतीमिवाहृताम्।
स मद्रराजस्य सुतां सुमध्यमां
चकार माद्रीं सहधर्मचारिणीम्॥ ५२ ॥

समुद्रगाया इति। धनुः कार्मुकमस्यास्तीति धन्वी धनुष्मान्। 'व्रीह्यादिभ्यश्च' इति इनिप्रत्ययः। 'धन्वी धनुष्मान् धानुष्कः' इत्यमरः। तेन समुद्रगाया गङ्गायास्तनयेन भीष्मेण मूर्तिमतीं साकारां जयश्रियं जयलक्ष्मीमिवाहृतामानीतां सुमध्यमां शोभनमध्यां माद्रीनामधेयां मद्र-

राजस्य । 'राजाहः सखिभ्यष्टच्' । सुतां दुहितरं स पाण्डुः सहधर्मं चरतीति सहधर्मचारिणीं पत्नीं चकार कृतवान् ॥ ५२ ॥

कदाचिदाखेटविहारकौतुकी[1]
सभोजमद्राधिपकन्यकासखः ।
धृतश्वभिर्धन्विभिरन्वितो रथी
ययौ वनं हैमवतं महारथः[2] ॥ ५३ ॥

कदाचिदिति । कदाचित् जातु महारथो महारथसंज्ञः स पाण्डुः आखेटविहारकौतुकी मृगयाविहारकुतूहली भोजमद्राधिपकन्ययोः कुन्तिमाद्र्योः सखा भोजमद्राधिपकन्यकासखः । 'राजाहः-सखिभ्यष्टच्' । रथी रथाधिरूढः सन् धृताः श्वानः शुनका यैस्तैः धन्विभिः धानुष्कैरन्वितः सन् संबन्धी हैमवतम् । 'तस्येदमित्यण्' । वनं ययौ ॥ ५३ ॥

स तत्र नागैरुरुभिर्दुरासदं
सशूरसिंहं चलखड्गिसंकुलम् ।
कुलं मृगाणामवधीत्कुरूद्वहो
दिशां जये द्दप्तमिव द्विषां बलम् ॥ ५४ ॥

स इति । स कुरूद्वहः पाण्डुः तत्र वने नागैः गजैः । 'मतङ्गजो गजो नागः' इत्यमरः । रुरुभिः मृगविशेषैः । 'कृष्णसाररुरुन्यङ्कु' इत्यमरः । दुरासदं दुष्प्रापम्; अन्यत्र उरुभिर्महद्भि-र्नागैर्गजैर्दुरासदम् । शूरसिंहैः बलवत्सिंहैः सहितं सशूरसिंहम्; अन्यत्र सशूरश्रेष्ठमित्यर्थः । चलाश्चलन्तो ये खड्गिनः गण्डमृगाः । 'गण्डकौ खड्गखड्गिनौ' इत्यमरः । तैः संकुलं व्याप्तम्; अन्यत्र चला ये खड्गिनो नैस्त्रिंशिकाः तैः संकुलं मृगाणां कुलं यूथम् । 'सजातीयैः कुलं यूथं तिरश्चां पुंनपुंसकम्' इत्यमरः । दिशां जये दिग्विजये द्दप्तं प्रमत्तं द्विषां शत्रूणां बलं सैन्यमिव । 'बलं सैन्यं बलोऽसुरः' इति विश्वः । अवधीत् जघान । हन्तेः 'लुङि च' इति वधादेशः । हन्तेः लोपस्य स्थानिवद्भावे न वृद्ध्यभावः ॥ ५४ ॥

---

1. ०लोलुपः 2. महाबलः

उरोविषक्तैर्मृगरक्तबिन्दुभि-
र्नितान्तसंभिन्ननिदाघपाथसः ।
नृपस्य खेदं मृगयाविहारजं
जहार नीहारगिरेः समीरणः ॥ ५५ ॥

उर इति । नीहारगिरेः संबन्धी समीरणो वायुः उरसि वक्षसि विषक्तैर्लग्नैः मृगरक्तबिन्दुभिः मृगरुधिरकणैः नितान्तमत्यर्थं संभिन्नं पृक्तं निदाघपाथः स्वेदजलं यस्य तस्य नृपस्य पाण्डोः मृगयाविहारजं आखेटश्रमणजं खेदं श्रमं जहार हृतवान् ॥ ५५ ॥

चरन्नरण्ये रममाणमेकदा
पुरो मृगद्वन्द्वमुदीक्ष्य[1] कौरवः ।
शरेण विव्याध मृगं स च क्षणा-
दहश्यत क्रन्दितमुत्सृजन्मुनिः ॥ ५६ ॥

चरन्निति । एकदा एकस्मिन् दिवसे । 'सर्वैकान्य' इत्यादिना दाप्रत्ययः । कौरवः पाण्डुः अरण्ये चरन् पुरोऽग्रे रममाणं संक्रीडमानम् । रमेर्लटः शानजादेशः । आत्मनेपदम् । मृगद्वन्द्वं मृगमिथुनमुदीक्ष्य दृष्ट्वा । 'स्त्रीपुंसौ मिथुनं द्वन्द्वम्' इत्यमरः । मृगं हरिणं शरेण बाणेन विव्याध ताडितवान् । व्यधेः 'लिट्यभ्यासस्य' इति सम्प्रसारणम् । स च मृगः क्रन्दितं शब्दमुत्सृजन् । 'क्रन्दितं रुदितं क्रुष्टम्' इत्यमरः । मुनिः सन् क्षणाददृश्यत मुनिरूपेणादृश्यत इत्यर्थः । दृशेः कर्मणि लङ् ॥ ५६ ॥

तमब्रवीत्सास्रकणव्रणेक्षणो[2]
नृपाख्यया किन्दम इत्यहं द्विजः ।
गतो मृगत्वं रमयन्निजां वधूं
स्मरेषु विद्धोऽस्मि शरेण ते हतः ॥ ५७ ॥

तमिति । सास्रकणानि सशोणितबिन्दूनि साश्रुबिन्दूनि च व्रणं क्षतं ईक्षणे लोचने च

1. ०मवेक्ष्य 2. ०सास्रशरव्रणेक्षणो

# THE
# RAMAYANARAHASYA
OF
# VIDYARANYA.

EDITED BY
*Vidyasagara, Vidyavacaspati,*
P. P. SUBRAHMANYA SASTRI, B.A. (Oxon), M.A., (MADRAS)
*Professor of Sanskrit, & Comparative Philology, Presidency College, Madras.*
*and Curator, Government Oriental Mss Library, Madras.*



—— SRIRANGAM ——
SRI VANI VILAS PRRSS.
1941



# INTRODUCTION.

The Ramayanarahasya of Vidyaranya is now published for the first time in the Nagari script. Vidyaranya, the author, does not seem to be identical with the Pontiff of that name who occupied the Sringeri Pitha from 1380 A. D. to 1386 A. D. Our author pays homage to his Guru Madhavaranya in stanza 21 of the Text, though this stanza is conspicuous by its omission in several other manuscripts of the Ramayanarahasya However, the colophon at the end of the manuscripts makes it clear that the author Vidyaranya was the pupil of one Madhavaranya.

The Ramayanarahasya starts with the enumeration of the qualities implied by the syllables of the Gayatri in stanzas 1 to 18 and the letters of the Gayatri in stanzas 22 to 46. In stanzas 47 to 59, the letters of the Gayatri are shown as exhibited within the first (the Samkshepa) sarga of the Balakanda in accordance with the appropriate qualities as narrated by Narada. And it is added that the letters herein, though not of the full quantity they possess as Gayatryaksharas are still recognisable in the main as akin to Gayatryaksharas. From stanza 63 onwards, the author quotes the stanzas in the body of the Ramayana wherein the Gayatryaksharas occur in the first stanza of each of of the twenty- four thousands of stanzas. It has to be noted that in these stanzas the Gayatryaksharas do not occur as the first letter of the stanzas in question but they are distributed promiscuously in the middle, end or beginning. But these twenty-four stanzas, from 63 to 87, are generally quoted as the Gayatri Ramayana.

There are at least two different texts called the Gayatri Ramayana. That which is usually recited by devout worshippers of Rama and which is generally found prefixed to standard editions of the Ramayana may be termed the traditional one. The chief peculiarity of this traditional version is that

the twenty-four letters of the Gayatri occur as the initial letters respectively of each of the twenty- four stanzas comprising this text.*

The other version of the Gayatri Ramayana is the text that is published in the Ramayana Rahasya now issued. Govindaraja, the famous commentator, adopts the above text as found in the Ramayanarahasya. The chief feature of this text is that the stanzas quoted do not begin with the Gayatri letters, but these letters occur promiscuously in the body of the text of the stanza, in the beginning, middle or end.

Both these texts do not fulfill the essential condition of the stanzas being found as the first stanza of each of the twenty-four thousand stanzas of Valmiki, nor do the Gayatri letters which they entomb correspond in quality or quantity to the letters of the Gayatri mantra. We give below in tabular form the details regarding the occurrence of each of the letters according to these two texts. (References are to the Edition of the Ramayana to the end of the Yuddhakanda in 8 volumes by the Sri Vani Vilas Press, Srirangam. and to the Uttarakanda, Kumbakonam edition).

| | TRADITIONAL. | VIDYARANYA. |
|---|---|---|
| Ta. | I— 1—1 | I— 1—1 |
| Sa. | I—30-23/24 | I—30-17/18 |
| Vi. | I—67-12 | I—63—3/4 |
| Tu. | II—15-20/21 | II—14-37 |
| Va. | II—40-15 | II—44—5 |
| Re. | II—67-34 | II—71-33/34 |
| N. | II—99-25 | II—99-25/26 |
| Ya. | III— 11-44/45 | III—12—4 |
| Bha. | III—43-17 | III—47-10/11 |
| Go. | III—72-17 | IV— 4—3 |
| De. | IV—22-20 | IV—31—1/2 |
| Va. | IV—43-34 | V— 1—1 |
| Sya. | V— 4—1 | V—27-14/15 |
| Dhi. | V—26-41 | V—46—9/10 |
| Ma. | V—53-27/28 | VI— 1—1 |

* Reference is invited to the Introduction to the Yuddhakanda of the Ramayana Part I published by the Sri Vani Vilas Press, Srirangam, for the content and scope of each Kanda.

| | TRADITIONAL | VIDYARANYA. |
|---|---|---|
| Hi. | VI—10-27 | VI—28-28/29 |
| Dhi. | VI—41-67/68 | VI—50-40 |
| Yo. | VI—59-139 | VI—68—1 |
| Ye. | VI—72-11 | VI—81—1 |
| Nah. | VI—94-26 | VI-112-26 |
| Pra. | VI-119-23 | VII— 1—1 |
| Co. | VII—16-26 | VII—22—7 |
| Da. | VII—34-42 | VII—41—1 |
| Ya. | VII—66—1 | VII—76-27/28 |

The Vidyaranya text has not the Gayatri letters even in the beginning of the stanzas in which they are declared to occur. They occur haphazardly in the body of the stanza without rhyme or reason, as one commentator remarks (Sri Ramayana Siromani I—1—1). At this rate any letter can be made to occur in any sacred text and such a device is positively useless, as it would be without purpose or design. But this text has the peculiar merit that it seems to possess a history attached to it.

Vidyaranya's Ramayanarahasya is preserved in full in Govindaraja's famous commentary on the Ramayana and the Tattvasangraha Ramayana, written by Ramabrahmanandasarasvati, the pupil of Svayamprakasanandasarasvati. The fifth chapter of this latter work quotes bodily the whole of the text contained in the Ramayanarahasya, referring to it as the work of Vidyaranya.

To facilitate easy reference and comparative study, the text of the traditional Gayatri Ramayana is printed as an Appendix to this Edition.

Presidency College, MADRAS.

*P. P. Subrahmanya Sastri.*
Editor.

एकत्रिंशे सर्गे—

सकामिनं दीनमदीनसत्त्वं शोकाभिपन्नं समुदीर्णकोपम् ।
नरेन्द्रसूनुर्नरदेवपुत्रं रामानुजः पूर्वजमित्युवाच ॥

श्रीमत्सुन्दरकाण्डे प्रथमसर्गादौ—

ततो रावणनीतायाः सीतायाः शत्रुकर्शन ।
इयेष पदमन्वेष्टुं चारणाचरिते पथि ॥

सप्तविंशे त्रिजटास्वप्ने—

ततस्तस्य नगस्याग्र आकाशस्थस्य दन्तिनः ।
भर्त्रा परिगृहीतस्य जानकी स्कन्धमाश्रिता ॥

षट्चत्वारिंशे सर्गे—

नावमान्यो भवद्भिश्च हरिर्वीरपराक्रमः ।
दृष्टा हि हरयः सर्वे मया विपुलविक्रमाः ॥

श्रीमद्युद्धकाण्डे प्रथमसर्गादौ—

श्रुत्वा हनुमतो वाक्यं यथावदभिभाषितम् ।
रामः प्रीतिसमायुक्तो वाक्यमुत्तरमब्रवीत् ॥

अष्टाविंशे रावणं प्रति शुकः—

रक्षोगणपरिक्षिप्तो राजा ह्येष विभीषणः ।
श्रीमता राजराजेन लङ्कायामभिषेचितः ॥

पञ्चाशे नागपाशविमोचनसमये—

तेजो वीर्यं बलं चौज उत्साहश्च महागुणाः ।
प्रदर्शनं च बुद्धिश्च स्मृतिश्च द्विगुणं तयोः ॥

अष्टषष्टितमे सर्गे उत्तरभागादौ—

कुम्भकर्णं हतं दृष्ट्वा राघवेण महात्मना ।
राक्षसा राक्षसेन्द्राय रावणाय न्यवेदयन् ॥

एकाशीतितमे—

विज्ञाय तु मनस्तस्य राघवस्य महात्मनः ।
संनिवृत्याहवात्तस्मात्प्रविवेश पुरीं तदा ॥

द्वादशशततमे—

मरणान्तानि वैराणि निर्वृत्तं नः प्रयोजनम् ।
क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥

उत्तरश्रीरामायणे प्रथमसर्गादौ—

प्राप्तराज्यस्य रामस्य राक्षसानां वधे कृते ।
आजग्मुः ऋषयः सर्वे राघवं प्रतिनन्दितुम् ॥

द्वाविंशे सर्गे—

ततः प्राचोदयत्सूतस्तान्हयाननुचिरप्रभान् ।
प्रययौ भीमसंनादो यत्र रक्षःपतिः स्थितः ॥

द्विचत्वारिंशादौ—

विसृज्य च महाबाहुः ऋक्षवानरराक्षसान् ।
भ्रातृभिः सहितो रामः प्रमुमोद सुखं सुखी ॥

अष्टसप्ततितमे रामं प्रत्यगस्त्यः—

ब्राह्मणस्य च धर्मेण त्वया वै जीवितः सुतः ।
उष्यतां चैव रजनीं सकाशे मम राघव ॥

प्रबन्धान्तश्लोकः—

लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठितः ॥

चतुर्विंशत्सहस्राणामाद्याः श्लोका इमे क्रमात् ।
एषु श्लोकेषु दृश्यन्ते मन्त्रवर्णा यथाक्रमम् ॥

दृश्यते च प्रबन्धान्ते मन्त्रान्तव्यञ्जनाक्षरम् ।
तस्मादिदं त्वादिकाव्यं गायत्रीं महतीं विदुः ॥

इत्येतदादिकाव्यार्थरहस्यं सांप्रदायिकम् ।
[1]विद्यारण्यमुनीन्द्रेण दर्शितं विदुषां मुदे ॥[2]

इति परमहंसपरिव्राजकपरिबृढेन माधवारण्य-
मुनिवरदयालब्धबोधेन श्रीविद्यारण्यमुनीश्वरेण प्रकाशितं
श्रीमद्रामायणरहस्यं संपूर्णम् ॥



1. क. विद्यारण्यमुनिर्ब्रह्मविदा प्राकाशयन्मुदा ॥ पाठान्तरम्

2 ख. गायत्र्याः श्रुतिमातुरर्थमखिलं प्रत्यक्षरं व्याकरो-
देकैकस्य सहस्रमारचितवान्ग्रन्थाश्च रामायणे ।
आलोड्याखिलवेदसारमवकृद्यत्तारकं ब्रह्म तद्
रामो विष्णुरहस्यमूर्तिरिति यो विज्ञाय वल्मीकभूः ॥

(अधिकः पाठः)

# APPENDIX.

## ॥ श्रीगायत्रीरामायणम् ॥

तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुंगवम् ॥ १ ॥

स हत्वा राक्षसान्सर्वान्यज्ञघ्नान्रघुनन्दनः ।
ऋषिभिः पूजितस्तत्र यथेन्द्रो विजये पुरा ॥ २ ॥

विश्वामित्रस्तु धर्मात्मा श्रुत्वा जनकभाषितम् ।
वत्स राम धनुः पश्य इति राघवमब्रवीत् ॥ ३ ॥

तुष्टावास्य तदा वंशं प्रविश्य च विशांपतेः ।
शयनीयं नरेन्द्रस्य तदासाद्य व्यतिष्ठत ॥ ४ ॥

वनवासं हि संख्याय वासांस्याभरणानि च ।
भर्तारमनुगच्छन्त्यै सीतायै श्वशुरो ददौ ॥ ५ ॥

राजा सत्यं च धर्मश्च राजा कुलवतां कुलम् ।
राजा माता पिता चैव राजा हितकरो नृणाम् ॥ ६ ॥

निरीक्ष्य स मुहूर्तं तु ददर्श भरतो गुरुम् ।
उटजे राममासीनं जटामण्डलधारिणम् ॥ ७ ॥

यदि बुद्धिः कृता द्रष्टुमगस्त्यं तं महामुनिम् ।
अद्यैव गमने बुद्धिं रोचयस्व महायशः ॥ ८ ॥

भरतस्यार्यपुत्रस्य श्वश्रूणां मम च प्रभो ।
मृगरूपमिदं व्यक्तं विस्मयं जनयिष्यति ॥ ९ ॥

गच्छ शीघ्रमितो राम सुग्रीवं तं महाबलम् ।
वयस्यं तं कुरु क्षिप्रमितो गत्वाद्य राघव ॥ १० ॥

देशकालौ भजस्वाद्य क्षममाणः प्रियाप्रिये ।
सुखदुःखसहः काले सुग्रीववशगो भव ॥ ११ ॥

वन्द्यास्ते तु तपःसिद्धास्तपसा वीतकल्मषाः ।
प्रष्टव्या चापि सीतायाः प्रवृत्तिर्विनयान्वितैः ॥ १२ ॥

स निर्जित्य पुरीं श्रेष्ठां लङ्कां तां कामरूपिणीम् ।
विक्रमेण महातेजा हनूमान् कपिसत्तमः ॥ १३ ॥

धन्या देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
मम पश्यन्ति ये नाथं रामं राजीवलोचनम् ॥ १४ ॥

मङ्गलाभिमुखी तस्य सा तदासीन्महाकपेः ।
उपतस्थे विशालाक्षी प्रयता हव्यवाहनम् ॥ १५ ॥

हितं महार्थं मृदु हेतुसंहितं व्यतीतकालायतिसंप्रतिक्षमम् ।
निशम्य तद्वाक्यमुपस्थितज्वरः प्रसङ्गवानुत्तरमेतदब्रवीत् ॥ १६ ॥

धर्मात्मा रक्षसां श्रेष्ठः संप्राप्तोऽयं विभीषणः ।
लङ्कैश्वर्यं ध्रुवं श्रीमानयं प्राप्नोत्यकण्टकम् ॥ १७ ॥

यो वज्रपाताशनिसंनिपातान्न चुक्षुभे नापि चचाल राजा ।
स रामबाणाभिहतो भृशार्तः चचाल चापं च मुमोच वीरः ॥१८॥

यस्य विक्रममासाद्य राक्षसा निधनं गताः ।
तं मन्ये राघवं वीरं नारायणमनामयम् ॥ १९ ॥

न ते ददृशिरे रामं दहन्तमरिवाहिनीम् ।
मोहिताः परमास्त्रेण गान्धर्वेण महात्मना ॥ २० ॥

प्रणम्य देवताभ्यश्च ब्राह्मणेभ्यश्च मैथिली ।
बद्धाञ्जलिपुटा चेदमुवाचाग्निसमीपतः ॥ २१ ॥

चालनात्पर्वतेन्द्रस्य गणा देवाश्च कम्पिताः ।
चचाल पार्वती चापि तदाऽऽश्लिष्टा महेश्वरम् ॥ २२ ॥

दाराः पुत्राः पुरं राष्ट्रं भोगाच्छादनभाजनम् ।
सर्वमेवाविभक्तं नो भविष्यति हरीश्वरः ॥ २३ ॥

यामेव रात्रिं शत्रुघ्नः पर्णशालां समाविशत् ।
तामेव रात्रिं सीताऽपि प्रसूता दारकद्वयम् ॥ २४ ॥

इदं रामायणं कृत्स्नं गायत्रीबीजसंयुतम् ।
त्रिसन्ध्यं यः पठेन्नित्यं सर्वपापैः प्रमुच्यते ॥



गर्गत्वम्, पञ्चालत्वम्, पदार्थत्वम्, पङ्कजत्वम्, इति ॥

ननु च,

जातिगुणाज्जातिगुणे धवखदिरादेः स्वजातिसंघाते ।
डित्थादौ च स्वरूपे कृत्तत्संयोगे तु संबन्धे ॥

त्वादय इति स्मृतिः; कथमभिन्नरूपादात्रपि भवति? उच्यते— 'कृत्तद्धितसमासेषु संबन्धाभिधानमन्यत्र रूढ्यभिन्नरूपाव्यभिचरितसंबन्धेभ्यः'। अत एवोक्तम्— 'कृत्तत्संयोगं योगिना भिन्नरूपम्' इति ॥

अवधेरपि वाच्यत्वं त्वादीनामिष्यते बुधैः ।
गोत्वाद्धि गौरिति ज्ञानमभिधानं च जायते ॥

ते ह्येवमाहुः— 'तस्य भावस्त्वतलौ' भवतोऽस्मादभिधानप्रत्ययाविति भावः। तदसत्; न हि गोत्वं गौरिति ज्ञानस्योत्पत्तावपादानतां जनयत् 'जनिकर्तुः प्रकृतिः' 'भुवः प्रभवो वा' भवति; यथा— शृङ्गाच्छरो जायते, हिमवतो गङ्गा प्रभवतीति। ज्ञानं त्वात्मन एव जायते, मनसैवोद्भवति; तदाह— 'व्यापकादप्यात्मनो युगपत् ज्ञानानुत्पत्तिर्मनसो लिङ्गम्; नाहमद्राक्षं, नाहमश्रौषं, नाहमज्ञासिषम्, अन्यत्र मे मनोऽभूदिति'। निमित्तत्वं तु गौरिति ज्ञानोत्पत्तौ शब्दस्येव गोत्वादेरपीष्यत एव। तत्र यथा समवायिनः श्वैत्यात् श्वैत्यबुद्धेः श्वेते श्वैत्यबुद्धिः, तथा समवायिनो गोत्वाद्गोत्वबुद्धेर्गवि गोत्वबुद्धिः; ते परस्परं कार्यकारणभूते इति। अभिधानं तु शब्दः; स च येनोच्चारितेनार्थः प्रतीयते। तस्यापि न गोत्वमवधिर्भवति। शब्दो ह्याकाशादेव जायते, मुखादेव प्रभवति; न गोत्वादेः। तदाहुः— 'मुखे हि शब्दमुपलभामहे भूमावर्थम्' इति। यदाऽपि नित्यः शब्द इति मतं तदाऽपि शब्दस्य गोत्वादयो वाच्याः विशेष्याः प्रत्याय्या एव भवन्ति। तत्र च शब्दस्य गोत्वादीनां वाच्यत्वे विशेष्यत्वे वा कर्मतैव, नावधित्वम्। प्रत्याय्यत्वे तु विपरिणामविपरिवर्तपक्षयोर्वक्ष्यमाणन्यायेन प्रत्युत शब्दस्यैवावधित्वम्। अध्यासस्तु सादृश्यादुपाधेरुपाधिसादृश्याभ्यां वा संभवति; यथा— शुक्तिकादौ रजतादेः, स्फटिकादौ रक्तादेः, प्रतिबिम्बादौ मुखादेरिति। तत्र यो यदध्यास्यते, यो यदध्यास्ते वा, स तस्याधिकरणं कर्म वा स्यात्, न त्वेवावधिः; गोत्वं निमित्तमुपादाय गोशब्दो गामध्यास्ते गवि वाऽध्यास्यते। तदिष्यत एव 'यस्य गुणस्य हि भावात् द्रव्यं शब्दनिवेशः तदभिधाने त्वतलौ' इति ॥

धात्वर्थरूपः कृदभिधेयो बहिरङ्गः; सोऽपि षोढा— भावरूपः, कारकरूपः, संबन्धिरूपः, भावविशिष्टः, कारकविशिष्टः, संबन्धिविशिष्टश्चेति। तत्र प्रवृत्तिनिमित्ततुल्यो भावरूपः— ब्राह्मणस्य कर्म ब्राह्मण्यम्, पुरोहितस्य पौरोहित्यम्, स्तेनस्य स्तेयम्, सख्युः सख्यम्, दूतस्य दूत्यम्, वणिजो वाणिज्यमिति। कारकैस्तुल्यकक्ष्यः कारकरूपः; यथा— राजानमर्हति राजवद्वृत्तम्, आप्रयोजनकालं भवति आकालिकी प्रवृत्तिः, श्येनस्येव पातोऽस्यां वर्तते–श्येनंपाता क्रिया, दण्डः प्रहरणमस्यां क्रीडायां–दाण्डा, महिमा अस्त्यस्यां–महिमिनी समस्या, वटकं प्रकृतमस्यां वटकमयी यात्रेति। रूढे द्रव्यभूतः संबन्धिरूपः; यथा—चाषाणां समूहः चाषम्, नाट्यानामाम्नायो नाट्यम्, भृग्वङ्गिरसां विवाहो भृग्वङ्गिरसिका, काकोलूकस्य वैरं काकोलूकिका, अवीनां संघातोऽविकटः, तेषामेव विस्तारोऽविपटः इति। अतर्कितोपनतचित्रीकरणादिसदृशो भावविशिष्टः; यथा— काकस्य चागमनं यादृच्छिकम्, तालस्य च पातः, तेन तालेन पतता काकस्य वधः; एवमेव देवदत्तस्य चागमनं दस्यूनां चोपनिपातः, तैश्च तस्य वधः; तत्र यो देवदत्तस्य दस्यूनां च समागमः स काकतालसमागम इवेत्येक उपमार्थः, यश्च देवदत्तवधः स काकवध इवेति द्वितीय उपमार्थः, तत्र प्रथमः समासार्थः काकतालमिति, द्वितीयः प्रत्ययार्थः काकतालीयमिति; समासश्चायमस्मादेव ज्ञापकात्; यदाह— समासाच्च तद्विषयादाकस्मिक इवार्थे च्छो भवति; तद्विषयादित्यत्र हि तदित्यनेन 'इवे प्रतिकृतौ' इतीवार्थः परामृश्यते। एवमजाकृपाणीयम्, अन्धकवर्तकीयम्, घुणाक्षरीयम्, अर्धजरतीयम्, गोमयपायसीयम्, इति। कारकावच्छिन्नः कारकविशिष्टः; यथा—मतस्य करणं मत्यम्, पीलूनां पाकः पीलुकुणः, जनस्य जल्पो जन्यः, शिवस्य भवनं शिवतातिः, नासिकाया अवनतिः अवटीटम्, धने कामः धनकः इति। संबन्धिनाऽवच्छिन्नः संबन्धिविशिष्टः, यथा— हल्यः काषः, सैधः संकोचः, पौरुषेयो वधः, आथर्वण आम्नायः, वैदो घोषः, छान्दोग्यो धर्मः, इति। उपाधिरपि संबन्ध्येव भवति, यथा—गार्गिकया विकत्थते, काठिकयाऽधिक्षिपति, गार्गिकामन्ववेतः, गार्गिकामवगतवान्, काठिकामवगतवान्, इति। धात्वर्थोऽपि भाव एव, क्रियाऽपि ह्युपमानेन परीता परिच्छिन्ना साध्यसिद्धभावो भवति। स त्रिधा— भावविशिष्टः, कारकविशिष्टः, संबन्धिविशिष्टश्चेति। तेषु भावविशिष्टो यथा— ब्राह्मणेन तुल्यमधीते–ब्राह्मणवत्, राज्ञा सदृशं वर्तते–राजवत्, जडस्य तुल्यं ब्रूते–जडवत्, सूर्य इव प्रकाशते–सूर्यवत्, पिता यथा पालयति–पितृवत्, गुरुरिवानुशास्ति–गुरुवदिति। अत्र ब्राह्मणादिष्वाध्ययनादिक्रियासु साहचर्याद्वृत्तिः, जातिद्रव्ययोरन्यतरेण क्रियायाः सादृश्यानुपपत्तेः। यदाह—'तेन तुल्यं क्रिया चेद्वतिः; तेनेति तृतीयासमर्थात् तुल्यमित्येतस्मिन्नर्थे वतिप्रत्ययो भवति यत्तुल्यं क्रिया चेत् सा भवति; अर्थपरं चैतत्; तेन सदृशेत्यादिप्रयोगेष्वतृतीयान्तादपि भवति। कारकविशिष्टो यथा—राज्ञेव व्यवहृतमनेन राजवत्, देवमिव भवन्तं पश्यामि देववत्,

असिनेव दात्रेण छिनत्ति असिवत्, ब्राह्मणायेव यदा देवदत्ताय ददाति ब्राह्मणवत्, पर्वतादिवासनादवरोहति पर्वतवत्, पितरीव गुरावाचेर्गत पितृवत्। अत्र पुनरिदमेव सूत्रमन्यथा व्याख्यायते—तेन कारकविशेषेण तुल्यं यथा भवति। एवं चेत क्रिया भवति भावोत्पन्ने विहितप्रत्यये कदाचित् प्रत्ययमुखेन क्रियाविशेषणं भवति, कदाचित् प्रकृतिमुखेन; यथा— तीव्रः पाकः, तीव्रं पाकम् इति। संबन्धिविशिष्टे यथा—ब्राह्मणस्येवास्य नास्य ब्राह्मणवत्, राज्ञ इव रौद्रं वृत्तमस्य राजवत्; जडस्य सदृशं वचनमस्य जडवत्, सूर्यस्येव प्रकाशोऽस्य सूर्यवत्, पितुर्यथा पालनमस्य पितृवत्, गुरोस्तुल्यमनुशासनमस्य गुरुवत् इति। अत्र तु 'तत्र तस्येव' इत्येनन वतिः। ननु च 'तेन तुल्यम्' इत्यनेनैव सिद्धे किमर्थं 'तत्र तस्येव' इति सूत्रारम्भः? द्रव्यगुणयोस्तुल्ययोः प्रत्ययो न लभ्यः इति; यथा—मधुरायामिव पाटलिपुत्रे प्रासादाः मधुरावत्, ब्राह्मणस्येव क्षत्रियस्य शुक्ला दन्ताः ब्राह्मणवत्, इति। यद्येवं पूर्वसूत्रे क्रियाग्रहणं न करिष्यते, साहचर्याच्च क्रियायामिव द्रव्यगुणयोः प्रातिपदिकं वर्तिष्यते; ततश्च मैत्रेयतुल्या गावश्चैत्रस्य, ब्राह्मणेन तुल्या दन्ताः क्षत्रियस्य इति विगृह्य पूर्वसूत्रेणैव वतिः सेत्स्यतीति। तदसत्; एवं हि गवयेन तुल्योऽनड्वान् इत्यत्रापि प्रत्ययः प्रसजेत; इवार्थे तु प्रत्यये सप्तमीषष्ठ्यन्ताभ्यामेव विधीयमाने गवय इवानड्वान् इत्यत्र प्रत्ययप्रसङ्गो न स्यात्; सप्तम्यन्तषष्ठ्यन्तयोर्हि बाह्यं संबन्धिनमपेक्ष्य इवशब्दप्रयोगो भवति, न पुनरिवार्थापेक्षयैव; इवशब्दो हि उपमानोपमेयभावलक्षणसंबन्धद्योतकः, न तु संबन्धिरूपाभिधायी। तस्माद्गवयेन तुल्योऽनड्वान् इत्यत्र मा भूत् प्रत्ययप्रसङ्ग इति पूर्वसूत्रे क्रियाग्रहणम्। तस्मिंश्च कृते द्रव्यगुणयोस्तुल्ययोः प्रत्ययो न स्यादिति सप्तमीषष्ठ्यन्ताभ्यामिवार्थे 'तत्र तस्येव' (पा.५-१-११६) इति वतिर्विधीयते। अथ 'तदर्हम्' (पा ५-१-११७) इति किमर्थम्?

> अर्हतो या क्रिया कर्तुस्तत्रापि वतिरिष्यते।
> उपमानाविवक्षायां तद्विधानं न लभ्यते॥
>
> उपमानोपमेयत्वमन्यस्यान्येन वा सह।
> अवस्थाभेदभिन्नत्वादेकस्याप्यात्मनैव वा॥

तत्रान्यस्यान्येन यथा— अवैयाकरणोऽप्ययं वैयाकरणवद्ब्रूते, योषिदप्येषा पुंवद्वक्तीति; अवस्थाभेदभिन्नत्वादेकस्याप्यात्मनो यथा— वैयाकरणः केनचिदुच्यते—वैयाकरणवद्ब्रूहीति; योषिदप्युच्यते- स्त्रीवद्वदेति। वैयाकरणोऽप्यवज्ञया कदाचिदवैयाकरणवद्ब्रूते; श्रूयते हि—यर्वाणस्तर्वाणा नाम साक्षात्कृतधर्माण ऋषयो बभूवुः। ते हि 'अन्तर्वेद्यामेव न म्लेच्छितव्यम्,

अतोऽन्यत्रावज्ञया' इति श्रद्धा नस्तद्वा न इति वक्तव्ये यर्वाणस्तर्वाण इत्यूचुः। योषिदपि कदाचिदाश्रितप्रागल्भ्यात् पुंवद्वक्ति, यथोच्यते—

सरस्वतीव कर्णाटी विजयाङ्का जयत्यसौ।
या वैदर्भगिरां भूमिः कालिदासादनन्तरम्॥

अस्यौपम्यद्वयस्यापि विवक्षातोऽपरिग्रहे।
वतिः कथमिवार्थीय इति (मत्वा) यदुच्यते॥

तत्र राजवद्वृत्तमित्यत्र यदैवंविधार्थविवक्षा— पृथ्वादिना राज्ञा तुल्यं वृत्तमनेन राज्ञा राजवद्वृत्तं राज्ञेति, तदाद्येनैव सूत्रेण सिद्धः प्रत्ययः। यदा त्वेतादृशी विवक्षा—राज्ञ इव पृथोरस्य वृत्तं राजवद्वृत्तं राज्ञ इति, तदा द्वितीयसूत्रेण। यदा त्विदं वृत्तं राजानमेवार्हति नान्यमित्युपमानोपमेयभावाभावे राजवद्वृत्तमिति प्रयोगः, तदा 'तदर्हम्' (पा. ५-१-११६) इत्यनेन वतिर्विधीयत इति नानर्थकः सूत्रारम्भः॥

अन्ये तु—'तेन तुल्यं क्रिया चेद्वतिः' (पा.५-१-११५) इत्यत्र द्वितीयव्याख्यानपक्षे क्रियायाः क्रिया विशेषणं न संभवतीति कारकाविशिष्टभावपक्षं 'तदर्हम्' (पा.५-१-११७) इत्यनेन संवाहयति; राजानमर्हति यद्व्यवहरणम्, देवमर्हति यद्दर्शनम्, असिमर्हति यच्छेदनम्, ब्राह्मणमर्हति यद्दानम्, पर्वतमर्हति यदवरोहणम्, पितरमर्हति यत् पारतन्त्र्यम्; तदुच्यते राजवत् देववत्, असिवत् ब्राह्मणवत्, पर्वतवत्, पितृवत्, इति। राज्ञेव व्यवहृतमित्यादिभिस्तु तस्यार्थः प्रदर्शित इति॥

कारकमपि भाववदेवान्तरङ्गं बहिरङ्गं च; तयोराख्याताभिधेयमन्तरङ्गम्, अनाख्याताभिधेयं बहिरङ्गम्; कर्ता हेतुकर्ता, कर्मकर्ता, कर्म चेति, करणं संप्रदानमपादानमधिकरणं चेति। तत्रान्तरङ्गभेदेषु कर्ता, शुद्धः, मिश्रः, संकीर्णश्च। तेषु क्रियाकारकान्तरासंपृक्तः शुद्धः; यथा—इष्टमनेन इष्टी यज्ञी, कृतः पूर्वं कटोऽनेन कृतपूर्वी कटमिति। क्रियान्तरसंपृक्तो मिश्रः; यथा—व्याकरणं वेत्ति अधीते वा वैयाकरणः, शश्वद्भवः शाश्वतिकः इति। क्रियाकारकान्तरसंपृक्तः संकीर्णः; यथा—शालायां प्रवेशमर्हति शालीनः अधृष्टः; कूपे प्रक्षेपणमर्हति इति कौपीनमकार्यम्। हेतुः— आत्मस्थक्रियः; परस्थक्रियः, परात्मस्थक्रियश्चेति। तेषु आत्मस्थक्रियो यथा—पारायणं वर्तयति पारायणिकः; चान्द्रायणं वर्तयति चान्द्रायणिक इति। परस्थक्रियो यथा—वातं शमयति वातिकं तैलम्; पित्तं शमयति पैत्तिकमिति। परात्मस्थक्रियो यथा— यथासुखं

दर्शयते यथामुखीन आदर्शः, संमुखं दर्शयते संमुखीनः प्रेयान्, इति। कर्मकर्ता— अनुद्रिक्त-कर्मांशः, उद्रिक्तकर्मांशः, अनुद्रिक्तोद्रिक्तकर्मांशश्चेति त्रिधा। तेष्वनुद्रिक्तकर्मांशो यथा— अक्षद्यूतेन निर्वृत्तमाक्षद्यूतिकं धनम्, पाकेन निर्वृत्तं पाकिमम्, माणिकम, इति। उद्रिक्तकर्मांशो यथा— वसन्ते पच्यन्ते वासन्त्यः कुन्दलताः, षष्टिरात्रेण पच्यन्ते षाष्टिकाः शालय इति। अनुद्रिक्तो-द्रिक्तकर्मांशो यथा— वशं गतो वश्यः, शीर्षच्छेदमर्हति शीर्षच्छेद्य इति। कर्म— निर्वर्त्यम्, विकार्यम्, प्राप्यम्, च। तेषु यदसज्जन्यते, सद्वा प्रकाश्यते, तन्निर्वर्त्यम्; यथा— उरसा निर्मितः औरसः पुत्रः, पाणिनिना प्रोक्तं पाणिनीयं व्याकरणम् इति। यस्य प्रकृत्युच्छेदो गुणान्तरं वा विधीयते तद्विकार्यम्; यथा— विषेण वध्यः विष्यः शत्रुः, कुसुम्भेन रक्तं कौसुम्भं वस्त्रमिति। आस्थितमनास्थितं वा क्रियया यदाप्तुमिष्यते तत् प्राप्यम्; यथा— नावा तार्यः नाव्यो ह्रदः, अयानयं नेयः अयानयीनः शार इति। ननु च शारोऽप्यास्थितः कस्मान्न भवति ?

त्यागरूपं प्रहातव्येऽप्यर्थे (प्राप्ये) संसर्गदर्शनम्।
आस्थितं कर्म यत्तत्र द्वैरूप्यं भजते क्रिया॥

यथा—पन्थानं गच्छति, गर्तमुत्तरतीति। शारस्तु प्राप्य एव; यथा—अजां नयति ग्रामं, (ग्रामं) वहति भारम् इति। नन्वेवं ग्रामस्य प्राप्यता प्राप्नोति, नाजादेः। कः पुनराह न प्राप्नोतीति; किंतु अकथितत्वेन तत्र क्रियाव्याप्यत्वाद्वितीयैव, न प्रत्ययान्तरम्— गां दोग्धि पयः, पौरवं गां याचते इति। बहिरङ्गभेदेषु करणम्— बाह्यम, आभ्यन्तरम्, बाह्याभ्यन्तरम्, च। तेषु बाह्यं यथा—सुपां व्याख्यानः सौपः, ललाटस्य भूषणं ललाटिका। आभ्यन्तरं यथा—मतस्य करणं मत्यम्, चतुर्णां पूरणश्चतुर्थः इति। बाह्याभ्यन्तरं यथा—समिध आधीयन्तेऽनेन सामि-धेन्यो मन्त्रः, [स एव] हृदयस्य बन्धनः हृद्य इति। संप्रदानम्— ददातिकर्माप्यम्, कर्ममात्राप्यम्, क्रियाप्यं च। संप्रदीयते भोजनादिकमस्मै इत्यन्वर्थसंज्ञकं ददातिकर्माप्यम्; यथा— अग्रभोजनं नियुक्तमस्मै दीयते आग्रभोजनिकः, पञ्चास्मै वृद्धिर्वा, आयो वा, लाभो वा, शुल्कं वा, उपदा वा, दीयन्ते पञ्चकः पुरुष इति। 'कर्मणा यमभिप्रैति स संप्रदानम् (पा. १. ४. ३२)' इति पारिभाषिकसंज्ञकं कर्ममात्राप्यम्; यथा— राष्ट्रमस्मै निर्दिश्यते राष्ट्रियो राजन्यः, कालिं कुर्वन्त्यस्मै कालेयं गन्धद्रव्यम्, इति। कर्मशब्देन क्रियाया अप्यभिधानात् क्रिययाऽपि यमभि-प्रैति स संप्रदानमिति, क्रियाप्यम्; यथा— अलंकर्मास्मै निर्दिश्यते अलङ्कर्मीणः अन्यूनः, न षडक्षाणि अस्मै भवन्ति अषडक्षीणो मन्त्र इति। अपादानम्— निर्दिष्टविषयम्, उपात्त-विषयम्, अपेक्षितक्रियं च। तेषु 'ध्रुवमपायेऽपादानम' (पा. १-४-२४) इति निर्दिष्टविषयम्; यथा— अग्निः पतति अस्मात् आग्नेयः ग्रावा, नद्यः स्यन्दन्ते अस्मात् नादेयः शैल इति।

श्रोत्रार्थादियोगोक्तमुपात्तविषयम् ; यथा— कुक्षिं रक्षन्ति अस्मात् कौक्षेयकः कृपाणः, मुद्गा भवन्त्यस्मात् मौद्गीनं क्षेत्रम्, इति । अवधिमात्रार्थमपेक्षितक्रियम् ; यथा— कर्णस्य मूलं कर्णजाहम्, पक्षस्य मूलं पक्षतिः इति । अधिकरणम्— वैषयिकम्, औपश्लेषिकं, नैमित्तिकं च । तेषु विविधमनेकप्रकारं जातिक्रियागुणद्रव्यादिभिः सिनोतीति विषयः देशकालादिः ; विषय एव वैषयिकः ; यथा— गावः सन्त्यस्मिन् गोमान् देशः, पौषी पौर्णमास्यस्मिन् पौषो मास इति । उपश्लेषोऽवष्टम्भः, तस्मै प्रभवति औपश्लेषिकम् ; यथा— दण्डिनोऽस्यां सन्ति दण्डिमती शाला, विंशतिरिहाधिका विंशं शतमिति । निमित्तमेव नैमित्तिकम् ; यथा— पूर्णो मासोऽस्यां पौर्णमासी[ति], परिखात्रस्यात् परिखेयो देश इति । कारकं च अन्तरङ्गबहिरङ्गभेदाद् द्विरूपमपि प्रकृत्युपाधेः कारकविशिष्टम्, अकारकविशिष्टम्, संबन्धविशिष्टम्, निपातविशिष्टं चेति चतुर्धा निर्धार्यते । तेषु कर्म कर्मविशिष्टं यथा— अयानयं नेय अयानयीनः शारः ; करणविशिष्टं यथा— चक्षुषा गृह्यते चाक्षुषं रूपम् ; अधिकरणविशिष्टं यथा— स्रुघ्ने कृतो वा, लब्धो वा, क्रीतो वा, स्रौघ्नः ; अपादानविशिष्टं यथा— तन्त्रादचिरापहृतः तन्त्रकः पट इति ; कर्तृविशिष्टं यथा— अश्वैरुह्यते आश्वो रथः ; कर्तृविशेषणमपि कर्तैव ; चतुर्भिरुह्यते चातुरं शकटम् ; अपिच–

कौमारी सा भवेद्भार्या यां कुमारः प्रपत्स्यते ।
प्रपद्यते कुमारी यं स कौमारो मतः पतिः ॥

संप्रदानविशिष्टं तु कारकं नास्ति । कर्ता कर्मविशिष्टो यथा— श्राद्धमनेनाद्य भुक्तं श्राद्धिकः ; क्रियाविशेषणमितिशब्दोपसंहारं च कर्मैव ; तद्विशिष्टो यथा— प्रतिकूलं वर्तते प्रातिकूलिकम्, माशब्द इत्याह माशब्दिक इति ; करणविशिष्टो यथा— अक्षैर्दीव्यति आक्षिकः ; अधिकरणविशिष्टो यथा— प्रावृषिकः, प्रावृषि भवः प्रावृषेण्यः ; अपादानविशिष्टो यथा— पितुरागतं पित्र्यं धनम् इति । कर्तृविशिष्टः कर्ता नास्ति । करणं कर्मविशिष्टं यथा— ग्रीवाया भूषणं ग्रैवेयं रुक्मदाम । एवं संप्रदानमपि यथा— मांसमेभ्यो नियुक्तं दीयते मांसिकाः पितरः । अपादानं कर्तृविशिष्टं यथा —व्रीहयो भवन्त्यस्मात् व्रैहेयं क्षेत्रम् । एवमधिकरणमपि यथा— शर्कराः सन्ति अस्मिन् शर्करिलो देशः । तदेव कर्मविशिष्टं यथा— पद्मास्मिन् दृश्यं पद्यः कर्दमः ; करणविशिष्टमपि यथा— दण्डः प्रहरणमस्यां दाण्डा क्रीडा इति । करणादयोऽस्य विशिष्टा न विद्यन्ते । कर्मकर्त्रोरेवाकारकसंबन्धिनिपातैर्विशेषणयोगः । स कर्मणोऽकारकेण यथा— मासाय भूतो मासिकः, संवत्सरमधीष्टः सांवत्सरिक इति ; कर्तुर्यथा— संतापाय प्रभवति सांतापिकः, वर्षं भूतो भावी वा वार्षिक इति । कर्मणः संबन्धिना यथा— वाक्यपदे अधिकृत्य कृतो ग्रन्थः वाक्यपदीयः, कलापिषु उद्ध्रियमानकलापेषु देयमृणं

कालापकम्, इति; कर्तुर्यथा— तित्तिरिणा प्रोक्तं विदन्ति अधीयते वा तैत्तिरीयाः, पूर्वं कृतं भुक्तं पीतं वा एभिः पूर्विण इति। कर्मणो निपातेन यथा—यथाकथाच क्रियते याथाकथ्यमिदम्, बहिः दृश्यते बाह्यम्, इति; कर्तुर्यथा— आराद्भवः आरातीयः, साक्षाद्द्रष्टा साक्षी इति।

ननु क्रिययाऽपि कर्मणः कर्तुर्वा विशेषणयोगः संभवति; तद्यथा— पाकेन निर्वृत्तं पाकिमम्, अपमित्यापमित्यकम, याचितेन याचितकम्, इति; यथा च सुस्नातं पृच्छति सौस्नातिकः, प्रभूतमाह प्राभूतिकः, कृतः (तं) पूर्वमनेन कटः कृतपूर्वी कटम् इति। उच्यते— क्रियाऽपि प्राकृतं कर्मैव; अतस्तद्विशिष्टयोरपि कर्मकर्त्रोः कर्म[कर्तृ]विशिष्टत्वमेव भवति। ननु च निर्वृत्तमित्येतस्य कथं कर्मता? इदं ह्यनुद्रिक्तकर्मांशे कर्तरि [कर्तरि वा] प्रयुज्यमानं दृश्यते। नैवम्, अन्तर्भूतण्यर्थत्वेनास्य सकर्मकत्वमपि मन्यन्ते; तथा च कात्यायनः—

'उत्तारणाय जगतः प्रपितामहेन तस्मात्पदात्त्वमसि रज्जुरिव प्रवृत्ता'।

मल्लनागोऽप्याह—'नागरकवृत्तं वर्तेत' इति। अथ कृतपूर्वी कटम् इति कथम्? न ह्यनेन प्रयोगेणापि भवितव्यम्। किं कारणम्? द्वितीयया तावत् नोत्पत्तव्यम्। तत् कुतः? क्तेनाभिहितम्। प्रत्ययेनापि नोत्पत्तव्यम्। किं कारणम्? असामर्थ्यात्। कथमसामर्थ्यम्? सापेक्षमसमर्थं भवतीति। उच्यते—नायं कर्मणि क्तः; अपि तु भावे। भावसाधनेन च कृतशब्देन योच्यते क्रिया तयेप्सितं कटादि कर्मानभिहितमेवेति। तत्र यथा ग्रामं गतो देवदत्त इति धातुनिष्ठाभ्यामभिधीयमानयोः क्रियाकर्त्रोः ग्रामादिकर्मभिरभिसंबन्धो भवति, एवं कृतपूर्वीति कृतशब्देन तद्धितेन वाऽभिधीयमानयोः क्रियाकर्त्रोः कटादिकर्मभिरभिसंबन्धो भवति; तथा हि— कृतं पूर्वमनेनेत्यास्मिन्नर्थे कृतपूर्विशब्दस्तद्धितान्तो वर्तते; तेन च पूर्वं कृतवानित्ययमर्थः संपद्यते; एवं च सापेक्षत्वाभावान्नास्त्यसामर्थ्यम्; अस्ति च करोतिवाच्यक्रियापेक्षं कटस्य कर्मत्वमिति तद्धितद्वितीयोत्पत्त्योर्नानुत्पत्तिः। तदुक्तम्—

अविग्रहा गवादिस्था यथा ग्रामादिकर्मभिः।
संबध्यते क्रिया तद्वत् कृतपूर्वादिषु स्थिता॥ इति॥

यदा तु कृतः पूर्वं कटोऽनेनेति विग्रहः, तदाऽपि न दोषः; यतः यद्यपि कृतादिशब्दाः कर्मणि व्युत्पाद्यमानाः सामानाधिकरण्यात् कटादिकर्मविशेषं निर्भुञ्जते, तथाऽपि नेत्थंभूता एव प्रत्ययमुत्पादयन्ति, वृत्तीनां विशेषप्रत्यायनासामर्थ्यात्; अतो वृत्तिविषयेऽनपेक्षितविशेषकर्मान्तर्भूतकर्मसामान्योऽन्य एव कृतशब्दो भवति। अविवक्षितकर्माणोऽन्तर्भूतकर्माणश्चाकर्मका एव

जायन्ते; यथा—'तस्माद्दीक्षितो न ददाति न पचति न जुहोति' इति। एवमकर्मकत्वेऽन्तर्भावाभिधाय्येव; तद्यानपेक्षत्वात् सामर्थ्ये सति प्रत्ययमुत्पादयति। प्रत्ययार्थश्च कर्त्ता क्रियया प्रकृत्यर्थेन यदीप्सति तत् कर्मानभिहितं प्रत्ययेन; ततो द्वितीया भवति। तदुक्तं भाष्ये—'योऽसौ कृतकटयोरभिसंबन्धः स उत्पन्ने प्रत्यये निवर्तते; अस्ति च करोतेः कटेन सामर्थ्यमिति द्वितीया भविष्यति कृतपूर्वी कटमिति'। हरिरप्याह—

विशेषकर्मसंबन्धे विनिर्मुक्ते कटा(कृता)दिभिः।
विशेषनिरपेक्षोऽन्यः कट(कृत)शब्दोऽवकल्पते॥
अकर्मकत्वे सत्येवं क्तान्तं भावाभिधायि यत्।
तेन क्रियावता कर्त्रा योगो भवति कर्मणाम्॥ इति॥

यदि वा शास्त्रप्रक्रियाभ्यासबाधितमतीनामेवायमभिमानः– वाक्यार्थे वृत्तयो भवन्तीति। परमार्थतस्तु—वृत्तिवाक्ययोरन्यत्वमेव मन्यन्ते, अर्थविप्रकर्षात्; यथा हि– वाक्ये यः कटादिकर्मसंबन्धः स वृत्तौ नास्ति, तस्यान्तर्भूतकर्मणः कृतशब्दस्य भावाभिधायित्वात्; तदुक्तम्—

विशेषः श्रूयमाणोऽपि प्रधानेषु गुणेषु वा।
शब्दान्तरत्वाद्वाक्येषु वृत्तौ नित्यं न विद्यते॥

भाष्यकारोऽप्याह—'नेदमुभयं युगपद्भवति वाक्यं च प्रत्ययश्च; यदा वाक्यं न तदा प्रत्ययः, यदा प्रत्ययः सामान्येन तदा वृत्तिः, तत्रावश्यं विशेषार्थिना विशेषणोऽनुप्रयोक्तव्यः कृतपूर्वी कटमिति'। एवमधीतमनेन, अधीतं व्याकरणमनेन इति वा अधीती व्याकरणे इत्यपि व्याख्यातम्।

संबन्धी द्विधा—प्रधानं गुणभूतश्च। तयोः प्रथमान्ताभिधेयः प्रधानम्; स त्रिधा—द्रव्यरूपः, गुणरूपः, अभिन्नरूपश्च। तेषु 'तस्यापत्यम्' (पा.४-१-९२) इत्यादिराश्रयवचनो द्रव्यरूपः; स द्विधा—निरपेक्षः, सापेक्षरूपश्च। तयोः निरपेक्षो यथा—वसिष्ठस्यापत्यं वासिष्ठः, पाणिनेः शिष्यः पाणिनीयः, पञ्चालानां राजा पाञ्चालः, पृथिव्याः ईश्वरः पार्थिवः, पाटलायाः पुष्पं पाटलम्, जम्ब्वाः फलं जाम्बवम्, इति। सापेक्षो यथा-- पितुः पिता पितामहः, पितुर्भ्राता पितृव्यः, मातुर्भ्राता मातुलः, भ्रातुरपत्यं भ्रातृव्यः, स्वसुः स्वस्रीय इति। 'तस्येदम्' (पा.४-३-१२०) इत्यादिराश्रित[वचनः] गुणवचनो गुणरूपः; स द्विधा— षष्ठीविशेष्यः, अषष्ठीविशेष्यश्च। तयोः

सूर्येन्दुसदृशभूषां सिन्दूरस्तोमसान्द्रसीमन्ताम् ।
कुटिलालककुललिलतां कुङ्कुमलेखापरिस्फुरन्निटिलाम् ॥ ७४ ॥

स्मरवीरसायकासनसदृशभ्रूलताभिरामाङ्गीम् ।
कर्णान्तायतनयनां कालिमसाम्राज्यदीक्षितकटाक्षाम् ॥ ७५ ॥

तिलकुसुमतुल्यनासां तरलस्मेरप्रभापरीवाहाम् ।
ताटङ्करत्नशोभातुन्दिलगण्डांशुखण्डितादर्शाम् ॥ ७६ ॥

कर्पूरचूर्णचञ्चद्वीटीधाटीविशिष्टवदनाब्जाम् ।
पारभृतपञ्चमस्वरपल्लवितध्वानगर्भितग्रीवाम् ॥ ७७ ॥

कञ्चुककरम्बितांसां कल्हारस्रक्समेतकेयूराम् ।
पाणिसरोजविराजत्पङ्केरुहयुगलपेशलाङ्गलताम् ॥ ७८ ॥

मुक्तामयूखमालामञ्जुलघावङ्कमस्तकोरोजाम् ।
नाभीतटाकनिर्गतशैवालोत्प्रेक्षणीयरोमलताम् ॥ ७९ ॥

मुलसद्वलीविरूढां सप्तमवस्तुन्यवस्थितवलयाम् ।
माणिक्यमरकतोज्ज्वलकाञ्चनकाञ्चीकलापकन्दलिताम् ॥ ८० ॥

अम्बरचुम्बिनितम्बव्यतिकरविभ्राजमानवस्त्रवृताम् ।
वेतण्डमण्डलीमणिशुण्डादण्डोरुकाण्डकमनीयाम् ॥ ८१ ॥

विषमशरविजयवर्धननिषङ्गसौभाग्यहरणचणजङ्घाम् ।
नखमणिमरीचिमालानीराजितपादपल्लवमनोज्ञाम् ॥ ८२ ॥

नलिनभवनिटिललोचननाकाधिपनमनकर्मकर्मकलाम् ।
सर्वातिशायिविभवां सर्वेश्वरसुन्दरीं श्रियं सेवे ॥ ८३ ॥

विलसति विष्णुवधूटी विपन्नवन्दारुभद्रपरिपाटी ।
सौन्दर्यरत्नपेटी सकलाश्रितलोकभृङ्गकुसुमवाटी ॥ ८४ ॥

कलमधुरकीरवाण्यः कारासंसारसागरद्रोण्यः ।
कमनीयदृग्जितैण्यः काश्चन पायासुरम्बुरुहपाण्यः ॥ ८५ ॥

अङ्गाभरणमुपासे भृङ्गावलिरश्मिरम्यदेहस्य ।
भङ्गाय भवभयानां तुङ्गाचलबन्धुकुचभरावद्धम् ॥ ८६ ॥

कमलविलासिकराब्जान्कल्याणासारकारणकटाक्षान् ।
कमलालयाभिधानान्कानपि क[illegible]ानि केऽत्रप्राणान् ॥ ८७ ॥

सरसिजसमेतकरया सकलजनानन्दकन्दलोत्सुकया ।
सर्वज्ञया कयाचित्कवचितचित्तोऽस्मि सागरोद्भवया ॥ ८८ ॥

अलमलमकमलवासैरजलधिजातैरविष्णुपरतन्त्रैः ।
अविधिहरवन्दनीयैरपरैरिह देवताभ्रमाधारैः ॥ ८९ ॥

कमनीयकमलधाम्ने कटितटसंबद्धकनकमणिदाम्ने ।
कल्याणकोटिसीम्ने कस्मैचिन्नतिरियं हरिप्रेम्णे ॥ ९० ॥

कुङ्कुमसमाधरेभ्यः कुवलयसब्रह्मचारिनयनेभ्यः ।
कुशलाङ्कुरक्रमेभ्यः कुर्मः प्रणतिं कुलाचलकुचेभ्यः ॥ ९१ ॥

नीलोत्पलसमनयनान्निःश्रेयससौख्यकन्दलीकन्दात् ।
नारायणान्तरङ्गान्नाङ्गीकरवाणि देवतामन्याम् ॥ ९२ ॥

विख्यातवैभवानां विश्वाधीशत्ववितरणपराणाम् ।
वारिनिधिसंभवानां वश्योऽहं विष्णुभागधेयानाम् ॥ ९३ ॥

आनन्दहेतुभूतैरापादाम्भोजचूडकरुणार्द्रैः ।
आदिपुरुषावरोधैराक्रान्तमभून्ममाधुना हृदयम् ॥ ९४ ॥

मन्दस्मितमधुरास्ये माद्दग्जनमोदकारणापाङ्गे ।
महदन्तरङ्गदासे महनीये महसि कुलचिह्नीये ॥ ९५ ॥

पीताम्बरप्रियेभ्यः पार्विकहरिणाङ्कसदृशवदनेभ्यः ।
पद्मालयाभिधेभ्यः प्रणतिः पीनस्तनस्तबाकितेभ्यः ॥ ९६ ॥

मन्दारमन्दहासैर्मदनागमतत्त्वबोधनाचार्यैः ।
मान्या काऽपि मृगीदृङ्मुरमथलं मोदमेदुरं कुरुते ॥ ९७ ॥

पिञ्जरिमपुञ्जमध्ये प्रत्यग्दृष्टयैव पश्यति प्राज्ञः ।
दारिद्र्यमूलकदनं वदनं सदनं च सरसिजं कोऽपि ॥ ९८ ॥

विरचय्य वीतरागा वरिवस्यां विष्णुसुन्दरीपदयोः ।
मग्नाः सुधासमुद्रे मोदन्ते मोक्षसौधमारूढाः ॥ ९९ ॥

नलिनोदरनिलयायै नमो नमो नीलनीरदकचायै ।
निखिलजनार्तिहरायै नमो नमो नन्दिताब्जनाभायै ॥ १०० ॥

जय जय जनिमृतिहरणे जय जय जैवातृकानने जननि ।
जय जय जलजनिवासे जय जय जगदीशि जय जयाब्धिसुते ॥

नारायणीयकरुणापरिवाहप्रकटितप्रभावेन ।
नारायणकविमणिना कलितां कवयः कटाक्षयन्तु कृतिम् ॥१०२॥

इति वाग्वादिनीवीक्षणविलासव्यवस्थितसरसकवितासाम्राज्यसार्वभौमेन
वासुदेवोपनामकेन मेधाश्रीपण्डितनारायणकविशेखरेण प्रणीतेषु प्रबन्धेषु
कमलास्तवकर्णरसायने प्रथमो निष्यन्दः संपूर्णः ॥

# ॥ चण्डिकास्तवः ॥

[ तस्यैव ग्रामाभिजनेन श्रीशंकरशास्त्रिणा विरचितः

---

माता या मधुकैटभाख्यदमनी माहेश्वरी माहिषो-
ज्जृम्भद्दर्पविमर्दिनी सुरगणैः संस्तूयमाना च या ।
या वै शुंभनिशुंभयोरनुचरैर्हन्त्री कृपार्द्रेक्षणैः
कल्याणं कुरुतां कटाक्षवलनैर्नः सादरं चण्डिका ॥ १ ॥

माया या मनसां विदूरचरिता मोहान्धकारावृतं
कृत्वा जीवशतं स्वदारतनुजप्रेमाधिरूढं स्वयम् ।
क्रीडन्ती भवजन्ममृत्युकुहरेष्वाब्रह्मकीटं मुदा
कल्याणं कुरुतां कटाक्षवलनैर्नः सादरं चण्डिका ॥ २ ॥

मेधोनाममुनिप्रघुष्टविभवा भूपाय वैश्याय चा-
मन्दानन्दसुधाब्धिपूरशशभृत्कान्तिच्छटा या सताम् ।
या वै दुर्जनदुःखदार्थिरचना वाचां विदूरे स्थिता
कल्याणं कुरुतां कटाक्षवलनैर्नः सादरं चण्डिका ॥ ३ ॥

गोविन्दं मधुकैटभौ कमलजोन्मर्दप्रवृत्तौ हठात्
हन्तुं तौ चतुराननेन विनुता या प्राहिणोदाज्ञया ।
यत्सांनिध्यनिरस्तनिद्रहरिणा तौ वञ्चितौ मम्रतुः
कल्याणं कुरुतां कटाक्षवलनैर्नः सादरं चण्डिका ॥ ४ ॥

सर्वैश्वर्यमदान्धदुष्टमहिषव्यापादनोद्यत्क्रुधां
तेजोराशिसमुद्भवा दिविषदां या संनुता नाकिभिः ।

नानारूपधरं निहत्य महिषं देवानरक्षत्पुरा
कल्याणं कुरुतां कटाक्षवलनैर्नः सादरं चण्डिका ॥ ५ ॥

या ब्रह्मादिसुरैरहर्निशमियं संस्तूयते साक्षिणी
प्रज्ञाबुद्धिसुषुप्तिकामकरुणाक्षान्त्यादिरूपा स्वयम् ।
दृश्याशेषचराचरात्मकतनुर्भुङ्क्ते हृषीकैर्जगत्
कल्याणं कुरुतां कटाक्षवलनैर्नः सादरं चण्डिका ॥ ६ ॥

यामाराद्धुमिमे निशुंभकलहे ब्रह्मादिदेवाः पुरा
सप्त स्त्रीत्वमवाप्य ते निजनिजप्रोद्यच्छराद्यायुधाः ।
ब्राह्मीत्यादिकसप्तमातृवपुषोऽयुध्यन्त यच्छासनात्
कल्याणं कुरुतां कटाक्षवलनैर्नः सादरं चण्डिका ॥ ७ ॥

कामान्धं जननीरिरंसुममितानीकेन संसेवितं
शुंभं तस्य कनिष्ठमप्यनुचरांश्चण्डादिकांश्चावधीत् ।
क्रुद्धा केसरिवाहना बहुबलं हा रक्तबीजं च या
कल्याणं कुरुतां कटाक्षवलनैर्नः सादरं चण्डिका ॥ ८ ॥

आर्ता ये समुपासते स्तुतिगणैर्देवैः कृतैर्मां सदा
तेषां दुःखशतं व्यपोह्य शुभदा सांनिध्यदा मुक्तिदा ।
आविर्भूय तदाऽस्मि भो इति वरो दत्तोऽखिलानां यया
कल्याणं कुरुतां कटाक्षवलनैर्नः सादरं चण्डिका ॥ ९ ॥

मानुष्यं चिरदुर्लभं तनुभृतां लब्ध्वाऽप्यहो दुष्कृते-
र्व्याशामोहवशाः प्रमत्तहृदयाः संसारकारागृहे ।
पात्यन्ते बहवश्चिरादपि यया भक्तेष्टदात्रैषिणः
कल्याणं कुरुतां कटाक्षवलनैर्नः सादरं चण्डिका ॥ १० ॥

श्रुत्वा सर्वचराचरात्मकमिदं संविन्मयं सूरयो-
ऽप्यन्धा इव श्रुतियुक्तिभिः शमदमक्षान्त्यादिभिर्नाप्नुवन् ।
यत्पादाम्बुजभक्तिहीनमनसो नैजानुभूतिं स्थिरां
कल्याणं कुरुतां कटाक्षवलनैर्नः सादरं चण्डिका ॥ ११ ॥

यत्पादाब्जरतिस्तु भाग्यवशतो जायेत चिरेः सतां
पूर्वानन्तजनुःसहस्रकृतसत्कर्मातिशुद्धात्मनाम् ।
संसारार्णवतारिणी निजपदानन्दैकमुक्तिप्रदा
कल्याणं कुरुतां कटाक्षवलनैर्नः सादरं चण्डिका ॥ १२ ॥

यत्पादस्मरणे सतां नयनतो बाष्पः समुज्जृम्भते
रोमाञ्चेन सगद्गदेन वचसा देहप्रपातेन च ।
चित्तं निर्मलसत्यचिद्घनमहानन्दात्मकं जायते
कल्याणं कुरुतां कटाक्षवलनैर्नः सादरं चण्डिका ॥ १३ ॥

मङ्गलानां निदानत्वाद्यामाहुः सर्वमङ्गलाम् ।
मङ्गलानि विदध्यान्मे चण्डिका सर्वमङ्गला ॥

चण्डिकास्तवः संपूर्णः ॥

---

हालामदाकलितहेलालसद्बहुललोलारुणाक्षियुगली
लीलापिनद्धसुरसालावलीप्रसवमालासुगन्धिचिकुरा ।
कैलासनाथहितशीला कराञ्चितशुकालापलोलहृदया
वेलातिलङ्घिशुभजालाय मे भवतु शैलाधिनाथतनया ॥ ६ ॥

चण्डापदानयुतचण्डाभिधासुरपिचण्डावदारणचणा
भण्डासुरोग्रभुजदण्डाग्रनिर्दलनशौण्डायुधोद्धृतकरा ।
शुण्डानुकारिकरकाण्डावदीर्णजगदण्डाट्टहासभयदा
दण्डायुधाय शशिखण्डावतंसितशिखण्डा न चार्पयतु माम् ॥

हुंकारनिर्गलदशङ्कापतद्द्विषदहंकारभारतिमिरां
अङ्कान्तलम्बिसितकङ्कालहारसदलंकारबन्धुरगलाम् ।
ह्रींकारिणीं भयदटङ्कारकार्मुककरां काळहस्तिनिलयां
पङ्कापहामपकलङ्कावतंसहरिणाङ्कां भजे भगवतीम् ॥ ८ ॥

कण्ठारवोद्यदुपकण्ठारिदुर्विषहकण्ठीरवेन्द्रगमनो-
त्कण्ठानिकामशितिकण्ठानुकर्षिकलकण्ठानुलापललिता ।
शुण्ठीभवद्दनुजकण्ठीरवप्रकरकुण्ठीकृतिक्षमबला
कुण्ठीकरोतु नरकण्ठीरवाख्यकविकण्ठीरवस्य दुरितम् ॥ ९ ॥

श्रीकाळहस्तिनिलयज्ञानप्रसवाम्बिकामुदे रचिता ।
नरकण्ठीरवकृतिना नवरत्नस्तुतिरियं चिरं जयतु ॥ १० ॥

इति श्रीकाश्यपवंशमुक्ताफलेन वट्टिपल्युपाख्याविख्यातेन पण्डितकुलसार्वभौमेन
सर्वतन्त्रस्वतन्त्रेण नरकण्ठीरवशास्त्रिणा रचिता श्रीकपिलेश्वरस्तुतिः
श्रीकाळहस्ति ज्ञानप्रसूनाम्बानवरत्नमालिका च संपूर्णा ॥

---



॥ श्रीशारदाम्बायै नमः ॥ श्रीगुरुभ्यो नमः ॥

# ॥ चित्तप्रसादनं नाम श्रीजगद्गुरुचरित्रम् ॥

महीशूरसंस्थानमहाविद्वद्भिः कुक्के सुब्रह्मण्यशास्त्रिभिः विरचितम् ॥

---

चन्द्रांशुगौरवसना धवलारविन्द-
सच्छायकायरुचिराश्रितराजहंसी ।
मुक्तामणीतरलहारलताभिरामा
चित्ते ममास्तु चतुरास्यकलावधूटी ॥ १ ॥

चेतः स्मर स्मरणमात्रविधूतकोटि-
जन्मान्तराघमभिवाञ्छितदानदक्षम् ।
सच्चित्सुखात्मशिवनव्यनृसिंहमन्त्रं
क्षेमायनं सपदि निर्वृतिमेषि येन ॥ २ ॥

अधीती यायजूकाग्र्यः प्रशान्तः पङ्क्तिपावनः ।
आसीद्रामाभिधो विद्वान् पदवाक्यप्रमाणवित् ॥ ३ ॥

कर्णाटवसुधापालकृष्णराजेन्द्रमानितः ।
महीशूरपुरेऽवात्सीत् शिष्यानध्यापयन्मुदा ॥ ४ ॥

दिक्चक्रवालजयिना स्वाधीनशतकोटिना ।
सत्प्रतीपक्षवादेषु येन शक्रायितं भुवि ॥ ५ ॥

काणादन्यायसिद्धान्तपारम्पर्योपदेशिनः ।
यच्छिष्या एव मान्यन्ते दक्षिणेषूत्तरेषु च ॥ ६ ॥

अनेनानन्यसुलभसौभाग्यं तस्य सूचितम् ।
चक्रमे यदपत्यत्वं चराचरगुरुः शिवः ॥ ७ ॥

अधिकर्द्धिरमुष्यासीह्लक्ष्मीरिति कुटुम्बिनी ।
स तया गृहमेधीयान्धर्मानातिष्ठदञ्जसा ॥ ८ ॥

उदभूद्भूरिगुणवान् तनयोऽस्यां नयोज्ज्वलः ।
लक्ष्मीनृसिंहाभिधानो वादिद्विरदकेसरी ॥ ९ ॥

प्रसादाद्दक्षिणामूर्तेः पूतात्मा सत्क्रियारतः ।
द्वितीयो यज्ञशर्माऽभूदद्वितीयो मनीषिणाम् ॥ १० ॥

पञ्चाक्षरमहामन्त्रजपनिर्धूतकल्मषा ।
बभार जठराम्भोधौ सा परं ज्योतिरैश्वरम् ॥ ११ ॥

जगद्गुरौ गर्भगते गुर्विण्यन्वर्थिकाऽभवत् ।
पिता प्रसन्नहृदयो मेने वंशं च पावनम् ॥ १२ ॥

चक्रे स धर्मसारज्ञः क्रियाः पुंसवनादिकाः ।
प्रतीतो गर्भगं नाम्ना शिवस्वामीति तं जगौ ॥ १३ ॥

जातकर्मणि तं दृष्ट्वा दिव्यलक्ष्मभिरङ्कितम् ।
दीप्ततेजःसमाक्रान्तं दध्यौ देवांशसंभवम् ॥ १४ ॥

रेजे स्फटिकसच्छायकायदीधितिमञ्जुलः ।
रेखाशशिकलः सर्वमङ्गलालंकृतः शिशुः ॥ १५ ॥

तत्तत्समयनिर्वृत्तैः संस्कारैर्विधिचोदितैः ।
स्वाभाविकं शिशोरस्य ब्रह्मतेजो विदिद्युते ॥ १६ ॥

महेश्वरे दृढा भक्तिर्ववृधे वपुषा सह ।
दुःसहद्वन्द्वनिर्मुक्तो दध्यौ बाल्येऽपि शंकरम् ॥ १७ ॥

प्रानृत्यदग्निशरणे चलालकमनोहरः ।
भस्मरूषितसर्वाङ्गः शंकरेति शिवेति च ॥ १८ ॥

अधीयानो ब्रह्मसूक्तं सेवमानो गुरुं वटुः ।
कुर्वाणो विहितं तस्थौ यावदर्थपरिग्रहः ॥ १९ ॥

बाल्येऽपि ववृधे भावियमिसाम्राज्यशंसिनी ।
विरक्तिरस्य भोगेषु गतिरन्या हि योगिनाम् ॥ २० ॥

मित्रेभ्यः संविभक्तेन संतुतोष फलादिना ।
चकमे नात्मकामाय यद्यच्छ्रेष्ठं नृणां भवेत् ॥ २१ ॥

अथास्य सुकृतोदारपरीपाकफलेग्रहिः ।
महीशूरपुरीं प्राप शृङ्गशैलाज्जगद्गुरुः ॥ २२ ॥

तीर्थोपदेशाच्चरतः शिष्यसंग्रहमिच्छतः ।
नृसिंहभारतीन्द्रस्य जातोऽयं नयनातिथिः ॥ २३ ॥

राज्ञा श्रीकृष्णराजेन समानीय समर्पिते ।
प्रसादमधुरा दृष्टिर्निदधे गुरुणा वटौ ॥ २४ ॥

अपृच्छत्तं यतीन्द्रोऽपि किमधीते भवानिति ।
प्रह्वः प्रत्यवदत्सोऽपि सुकृतेनेव चोदितः ॥ २५ ॥

अधीतवान्गुरो शैवभुजङ्गस्तोत्रमुत्तमम् ।
पद्यमेकं वदेत्युक्तो मधुरं व्याजहार सः ॥ २६ ॥

दानकालो ह्ययं नाथ दानपात्रमहं भवान् ।
दाता त्वदन्यं न वृणे भक्तिं देहि स्थिरां त्वयि ॥ २७ ॥

सुधामधुरया वाचा जलदारावधीरया ।
इति व्याहृतमाकर्ण्य यतीन्द्रः प्राह संसदि ॥ २८ ॥

कोटिजन्मार्जितैः पुण्यैर्मिलितः शिष्यपुंगवः ।
धर्मकोशस्य गोप्ताऽसौ भविता नात्र संशयः ॥ २९ ॥

इत्युपामन्त्र्य राजानं पारिव्रज्यमथादिशत् ।
उपादिशन्महावाक्यं यतिधर्मान्स्वयं गुरुः ॥ ३० ॥

आदिष्टसंन्यासविधिः सुप्तः स्वप्ने ददर्श सः ।
आत्मानं भद्रपीठस्थं परीतं ब्रह्मवादिभिः ॥ ३१ ॥

गुप्तं कयाचिद्योगिन्या शारदाभ्रसवर्णया ।
एहि वत्सेत्युपामन्त्र्य पाठयन्तं जगद्गुरुम् ॥ ३२ ॥

अनूच्चचार तद्वाचं सर्वोऽहमिति सोऽञ्जसा ।
गुरुर्विनिद्रः पार्श्वस्थस्तमुत्स्वप्नं निशम्य सः ॥ ३३ ॥

ननन्द पूर्वसुकृतैः सिद्धोऽयमिति संगिरन् ।
उत्थाय स्वप्नवृत्तान्तं जगाद गुरुसंनिधौ ॥ ३४ ॥

त्वमौरसः सुतो देव्या योगीन्द्रो भवितासि च ।
इत्याशिषमदात्तस्मै न मृषोद्या गिरोऽस्य हि ॥ ३५ ॥

अधीयानः शास्त्रतत्त्वं शिष्यानध्यापयत्सदा ।
प्रमाणपदवीं भेजे शास्त्रमर्मविनिर्णये ॥ ३६ ॥

नैवाग्रहः स्वपक्षेऽपि न द्वेषो विमतेष्वपि ।
जगद्गुरुत्वमन्वर्थमतो लोकेषु पप्रथे ॥ ३७ ॥

सर्वदा स्मेरवदनं सर्वभूतहिते रतम् ।
दृष्ट्वैव नितरां सद्भिर्नवेन्दुमिव पिप्रिये ॥ ३८ ॥

हृदयाम्भोजमध्यस्थशशिमौलिजटातटात् ।
निर्गलत्स्वर्धुनीवास्य वक्त्राद्वाणी विनिर्ययौ ॥ ३९ ॥

मैत्री प्रमुदिता शान्तिर्दया नैसर्गिका गुणाः ।
तेषामयुतसिद्धानां संसर्गो मूर्तिमानसौ ॥ ४० ॥

तस्य सर्वे समारम्भाः परार्थपरिणामिनः ।
निःस्पृहस्याभवन्लोके महाभूतगुणा इव ॥ ४१ ॥

धनदस्पृहणीयेषु सिद्धेषु विभवेष्वपि ।
चीवरं दारुपात्रं च बभूवास्य परिग्रहः ॥ ४२ ॥

मूर्ध्नीन्दुकलया बाह्वोः शूलाङ्केन शशित्विषा ।
जगन्मङ्गलया मूर्त्या प्राज्ञास्तं मेनिरे शिवम् ॥ ४३ ॥

लोकसंवननं वक्त्रं लोचनासेचनाऽऽकृतिः ।
वाणी प्रसादमधुरा न देवांशमृते भवेत् ॥ ४४ ॥

न कोपचिह्नं वदने कृतं तेन मनागपि ।
न मृषोद्या गिरः प्रोक्ताः परिहासकथास्वपि ॥ ४५ ॥

विभिन्दंस्तामसीं वृत्तिं भुवनान्यनुरञ्जयन् ।
दर्शनाद्दुरितं निघ्नन्रेजे भानुरिवोदितः ॥ ४६ ॥

लघीयांसोऽपि विबुधाः गुणरत्नौघसागरम् ।
तमासाद्य ययुर्वृद्धिं रिक्तमेघा इवाम्बुधिम् ॥ ४७ ॥

दयारसपरीवाहः प्रसादः किमु मूर्तिमान् ।
शरीरिणी वा किं क्षान्तिः धर्मः किं कायवानयम् ॥ ४८ ॥

योगसम्पत्परीपाकः फलितः सत्त्वपादपः ।
किमु मूर्तो गुणग्रामः जङ्गमः सुरभूरुहः ॥ ४९ ॥

तुङ्गाशैवलिनीरम्यपुलिने विजने वसन् ।
ध्यानयोगेन निर्धूतद्वैतक्लेशो ननन्द सः ॥ ५० ॥

कामसंकल्परहितः कर्मयोगी बभूव सः ।
नैष्कर्म्यसिद्धाः कुर्वन्ति लोकसंग्रहणव्रतम् ॥ ५१ ॥

भक्त्या महेशमभ्यर्च्य योगक्षेमाय देहिनाम् ।
ययाचे स प्रसन्नस्य पुरतः कथयन्निव ॥ ५२ ॥

कोशः शास्त्राभिसन्धीनां प्रतिभायाः परायणम् ।
सौजन्यजन्मसदनं वात्सल्यस्य निवासभूः ॥ ५३ ॥

दयालुरनघः शान्तः क्षमी दाता प्रभुर्गुरुः ।
किमयं न शिवः साक्षात् चरिष्णुर्धरणीतले ॥ ५४ ॥

स्वप्ने यस्य निसृष्टार्थदूतीव जगदम्बिका ।
भाविकार्याणि संदिश्य व्यतानीज्जगतां हितम् ॥ ५५ ॥

कलिशासनसंक्षुब्धदुराचारमहार्णवे ।
निमज्जतः समुद्धर्तुं देव्यादेशमनुस्मरन् ॥ ५६ ॥

चकार कालटीक्षेत्रे शंकरस्थापनादिकम् ।
प्रावर्तयच्छास्त्रपाठशालां विबुधसेविताम् ॥ ५७ ॥

अन्यानप्रलयोद्वेलवृजिनार्णवतारकान् ।
धर्मान् संस्थापयामास लोकद्वयशुभोदयान् ॥ ५८ ॥

तुलितामृतधाराभिर्वाग्भिर्भक्तिसुधामयी ।
तरङ्गिणी प्रववृते यस्य वक्त्रारविन्दतः ॥ ५९ ॥

प्रतिष्ठितं शंकरार्यैर्विद्यातीर्थैः प्रसाधितम् ।
व्याख्यासिंहासनं दिव्यमेभिः संवर्धितं भुवि ॥ ६० ॥

श्रीचक्रबैन्दवाश्लिष्टसुधाचैतन्यविग्रहा ।
यदध्यास्ते जगद्धात्री शारदा सर्वकामदा ॥ ६१ ॥

तत्सद्म शिथिलं वीक्ष्य श्रीशंकरविनिर्मितम् ।
नवीकर्तुमना मूलशिलारोपं स्वयं व्यधात् ॥ ६२ ॥

स्निग्धेन्द्रनीलसच्छायस्तम्भराजिविराजितम् ।
बहिर्विहाररुचिरं मसृणाङ्गणवेदिकम् ॥ ६३ ॥

दान्तरौक्ममहानीलमुक्तातोरणभासुरम् ।
भुवनाकल्पशिखरैर्लोचनासेचनाकृति ॥ ६४ ॥

वाणी वसति यत्रैव ब्रह्मलोकं विहायसा ।
नालं किमेतत्सौभाग्यसौन्दर्यादिनिदर्शने ॥ ६५ ॥

संकल्पमात्रसंसिद्धे तस्मिन्योगधुरंधरः ।
ऋतंभरां समालम्ब्य किमप्यन्तर्विचिन्त्य सः ॥ ६६ ॥

दुर्विज्ञेयनिजाकूतः शिष्यानन्वशिषत्तदा ।
कोटिलिङ्गसमभ्यर्चापरिपूतकुलोद्भवः ॥ ६७ ॥

वटुव्रतो नृसिंहाख्यश्चन्द्रशेखरभारती ।
अस्मत्परम्परां प्राप्य जितात्मा ख्यातिमेष्यति ॥ ६८ ॥

अस्मत्संकल्पमखिलं निर्वोढाऽस्मदनुग्रहात् ।
संकल्पः प्रत्ययापेक्षी बलीयान् कालविप्लवः ॥ ६९ ॥

एवमेवाखिलं भाव्यं यतध्वं कार्यसिद्धये ।
भविष्यत्यचिरात्सिद्धो मत्संकल्पो भवन्मुखात् ॥ ७० ॥

इत्यासज्य च तत्कार्यमात्मनीनाश्रवेषु सः ।
प्रत्याहृतमना योगी विषयेभ्यः प्रसन्नधीः ॥ ७१ ॥

कालसंकर्षिणीविद्याधारणाद्धृतसाध्वसः ।
सूक्ष्माण्यावेश्य भूतेषु तानि चित्ते निवेश्य सः ॥ ७२ ॥

विलाप्य प्रकृतौ चित्तं प्रकृतिं चश्वदर्चिषि ।
जुहावात्मानले दीप्ते मृत्योर्मूर्ध्नि पदं न्यधात् ॥ ७३ ॥

केवलानन्दविस्फूर्तिस्तमःपारमुपाविशत् ।
इहैवाभ्यासयोगेन ब्रह्मभूयमवाप सः ॥ ७४ ॥

विस्फुलिङ्ग इवालाते चलदूर्मिरिवाम्बुधौ ।
घटाकाश इवाकाशे विलिल्ये स्वात्मनात्मनि ॥ ७५ ॥

जागर्ति भुवि तत्कीर्तिरधुना भद्रदायिनी ।
अपदानानि भूयांसि पावनानि महात्मनः ॥ ७६ ॥

तदेकदेशचरितं जन्मकर्मगुणोज्ज्वलम् ।
तत्प्रसादादधिगतैर्व्याहारैर्विवृतं मया ॥ ७७ ॥

गुणवद्वस्तुसंसर्गात्कण्ठधार्यं भवेत्सताम् ।
तत्क्षेत्रं सा महादेवी तद्गुरोश्चरितं महत् ॥ ७८ ॥

सकृत्स्मरणतः पुंसामशेषाघहरं स्मृतम् ।
विवृतिर्भक्तियोगादेः सामग्री काव्यसंपदाम् ॥ ७९ ॥

पुरुषार्थः फलं पुंसां लाभः श्रीगुर्वनुग्रहः ।
संपत्स्यन्ते सतां तेन संपदो ह्युदितोदिताः ॥ ८० ॥

निखिलभुवनरक्षादक्षिणा नेक्षसे मां व्यवहितानिकटस्था न प्रलापं शृणोषि ।
ननु मयि कुलदासे यद्युपेक्षां कृषीष्ठाः भवतु मम तु चित्तं त्वत्स्मृतिं नैव जह्यात् ॥

पालनीया वयं दासा इति न प्रार्थयामहे ।
स्वामी स्वस्वत्वरक्षायां न भृत्यैरनुनाथ्यते ॥ ८२ ॥

यः शैशवे सहजचापलदुर्विनीतं निर्व्याजवत्सलहृदा बहुधा विनीय ।
जाड्यं धियः प्रबलरूढमपि व्यहार्षीत्तं सर्वभूतसुहृदं गुरुमर्चयामि ॥ ८३ ॥

निःस्वाय पुस्तकमदात्क्षुधिताय चान्नं रुग्णाय भेषजमपीपलदादरेण ।
यो मामनन्यशरणं करुणार्द्रचेतास्तं देशिकेन्द्रमनिशं न हि विस्मरामि ॥ ८४ ॥

मन्दस्य शास्त्रसरणौ बहुलश्रमस्य वक्त्रं निरीक्ष्य दयया गुरुराह यन्माम् ।
वाग्देवता दिशतु ते धियमित्यनल्पसौभाग्यमेतदधुना फलितं प्रकामम् ॥ ८५ ॥

अधीतिः साहिती यस्य विनेता श्रीजगद्गुरुः ।
सुब्रह्मण्यस्य कृतिषु जीयाच्चित्तप्रसादनम् ॥ ८६ ॥

---

# ॥ श्रीसद्गुरुपादुकास्तवराजः ॥

श्रीमच्चिदानन्दतीर्थस्वामिभिर्विरचितम् ॥

श्रीमच्छृङ्गगिरावधिष्ठितवतो व्याख्यानसिंहासनं
श्रीविद्यामनुजापनिर्मलतरस्वान्तस्य शान्तात्मनः ।
श्रेयःसंततिसंप्रदानकलनाकल्पद्रुलीलाजुषः
श्रीमच्चन्द्रकिशोरशेखरगुरोः श्रीपादुका मे गतिः ॥ १ ॥

वेदान्ताम्बुधिमन्थनोद्यतमनोमन्थानसंपादित-
ब्रह्मानन्दसुधाझरीरसभरास्वादप्रसन्नात्मनः ।
वाग्वैखर्यभिभूतवैबुधमहाचार्यस्य साधीयसः
श्रीमच्चन्द्रकिशोरशेखरगुरोः श्रीपादुका मे गतिः ॥ २ ॥

कारुण्यामृतपूरपूरितहृदः कल्याणपारंपरी-
केलीमन्दिरतामुपाश्रितवतः कामान्तकोपासिनुः ।
काषायाङ्कितवाससः करलसद्दण्डस्य कान्ताकृतेः
श्रीमच्चन्द्रकिशोरशेखरगुरोः श्रीपादुका मे गतिः ॥ ३ ॥

वेदान्तध्वनिघोषिणो बुधमयूराणां मनस्तोषिणः
विद्यासस्यविपोषिणः स्वजनतासंतापविद्वेषिणः ।
अद्वैतामृतवर्षिणो जलधरस्यानन्दसंदायिनः
श्रीमच्चन्द्रकिशोरशेखरगुरोः श्रीपादुका मे गतिः ॥ ४ ॥

संसाराम्बुधिपारलङ्घनकलाजङ्घालतामीयुषः
सर्वाम्नायरहस्यबोधनविधौ वैदग्ध्यमासेदुषः ।
वैराग्यैकनिकेतनस्य विबुधव्रातैकरक्षामणेः
श्रीमच्चन्द्रकिशोरशेखरगुरोः श्रीपादुका मे गतिः ॥ ५ ॥

आस्थानीमधिजग्मुषोऽपि विषयेष्वास्थामनापेदुषः
कारुण्यार्द्रकटाक्षसन्ततिजुषः कल्याणसीमापुषः ।
तुङ्गातीरमुपेयुषो मम मनस्यावासमासेदुषः
श्रीमच्चन्द्रकिशोरशेखरगुरोः श्रीपादुका मे गतिः ॥ ६ ॥

जीवन्मुक्तिसुखानुभूतिलहरीमामज्ज्यमानान्तरो-
ऽप्यात्मानं जडबालमूकबधिरोन्मत्तादिवद्दर्शयन् ।
योऽयं व्यञ्जयति क्रमेण भरतादीनां स्थितिं तादृशः
श्रीमच्चन्द्रकिशोरशेखरगुरोः श्रीपादुका मे गतिः ॥ ७ ॥

सङ्गी बाध्यत एव लोक इति वा वैयासिकं यद्वचः
तस्याप्यद्भुतगौरवं विशदयन्सङ्गं त्यजँल्लौकिकम् ।
स्वात्मानन्दरसानुभूतिभरितो बाभाति यस्तादृशः
श्रीमच्चन्द्रकिशोरशेखरगुरोः श्रीपादुका मे गतिः ॥ ८ ॥

आलापैरनवद्यसूक्तिभरितैरानन्दसंदायिभिः
ब्रह्मात्मानुभवप्रकाशनपरैः स्वैरोद्गतैः सुस्वरैः ।
बालोन्मत्तविडम्बनव्यतिकरे व्यावृण्वतो नैपुणीं
श्रीमच्चन्द्रकिशोरशेखरगुरोः श्रीपादुका मे गतिः ॥ ९ ॥

चमत्कृतसुधीचेताश्चन्द्रचूडालसद्गुरुः ।
सच्चिदानन्दतीर्थेऽस्मिन्समुदञ्चयतां दृशौ ॥ १० ॥

इति श्रीमत्सद्गुरुवरचरणसरोरुहसेवासमासादितसारस्वतविभवलेशेन सच्चिदानन्दभिक्षुणा विरचितमिदं सद्गुरुपादुकास्तोत्रम् संपूर्णम् ॥

---




अयि वाचकवरेण्याः! किमपीदं प्राप्तावसरमभ्यर्थनं तत्रभवतां पुरस्तादनुपस्थापयितुं न प्रभवामः। विदितचरमेव स्यादिदं वाचकमहोदयैः, यदत्र कवेरजापरिसरे श्रीरङ्गक्षेत्रे अनल्पतरशिल्पकल्पनाभिरल्पीकृतविमानरामणीयकम्, परःशतदेवताप्रतिकृतिपरिवेष्टितेन सुपरिष्कृतेन गोपुरवरेण परिकर्मितम्, सर्वर्तुसमधिगम्यसमधिककुसुमसंचयसमलंकृतसर्वतोमुखसमेधमानसुमवाटिकासंवलितसुन्दरतमसंनिवेशसमावर्जितसर्वजनस्वान्तम्, मन्दमन्दसंचरन्मन्दानिलस्पन्दविगलन्मन्दारपारिजातजातीचम्पकमल्लिकामालतीवकुलादिसुरभिलसुमनःसंततिसंधुक्षितसौरभ्यातिशयगर्भीकृतप्राग्भारम्, अनवरतकुसुमवाटिकापर्यटनपटुतरमधुकरनिकरझंकाररवमुखरीकृतहरिदन्तरम्, कर्मन्दिजनमनःशर्मनिर्माणपटुतरपर्णपटलावृतकुटीरततिस्फुटीकृतशान्तिरसोल्लासम्, अपङ्किलजलसंततिसंकुलशुभंकरशंकरसरोवरसंवितीर्णसंदर्शकजनानन्दसन्दोहं सुन्दरतमं किमपि मन्दिरं निर्माय, प्रतिष्ठाप्य च तन्मध्ये अमृतशिलामयीं भगवत्पादीयां मूर्तिं, संनिधाप्य च तथा पार्श्वयोः श्रीमहात्रिपुरसुन्दर्याः शृङ्गगिरि श्रीमदाचार्येन्द्राणां च मूर्तिद्वितयीम्, व्यवस्थाप्य च तत्र नित्यपूजाराधनादिसंविधानकनियमविशेषान्, निवेश्य च परःसहस्रपुस्तकावलीपरिष्कृताभ्यन्तरं श्रीसच्चिदानन्दभारतीभाण्डाराख्यं विशालं पुस्तकालयम्, अतिवाह्य च भगवत्पादचरणपरिचरणपरिचयेनैव यावदियन्तं कालम्, संविधाय च श्रीमद्भगवत्पादीयभक्तकोटीनां तत्संदर्शनभजनादिषु यथावदानुकूल्यम्, सद्व्यवसायेनानेन समयमेतावन्तं भक्तजनसेवाकर्मणि यथावत्प्रावर्तिष्महि, प्रवर्तिष्यामहे च यथाशक्ति तत्सेवार्थमिति ॥

अधुना खल्वागामिविक्रमवत्सरीयवैशाखशुद्धपञ्चम्यां शंकरजयन्तीदिने अत्रैव गुरुकुलमप्युपक्रंस्यते, यत्र खलु दशाधिकानां विद्यार्थिनां वेदवेदाङ्गवेदान्तादिकमध्यापयितुं समुचिता व्यवस्थाऽपि यथायथं करिष्यते। अस्मत्पूर्वपुरुषक्षुण्णां प्राक्तनीं पद्धतिमनपहाय अध्ययनाध्यापनादिक्रमस्य नियमितत्वादेव गुरुकुलम् इति नामाप्यस्य न्यवेशि। इयन्तं कालं भाविनीं वृत्तिमाश्रित्यैव गुरुकुलसंज्ञा समाद्रियत। विद्याशालानियमनात्परं तु सैषा संज्ञा अन्वर्थतामनुविन्देत। एतादृशगुरुकुलाङ्गतयैव पत्रिकाऽप्येषा प्रावर्तिष्ट ॥

गुरुकुलपत्रिकायामस्यां इयन्तं कालं कुत्राप्यमुद्रितचराः साहित्यग्रन्थाः शास्त्र-प्रकरणादयो लघुनिबन्धाः सरसरमणीया आधुनिकानां प्राचां च कविताविशेषाः सनातन-धर्मसंबन्धिनो विमर्शात्मका उपन्यासात्मकाश्च लेखा एकत्रीकृत्य संनिवेशिता इति प्रकृतपत्रिकादर्शिनां स्फुटमेव । केवललोकवृत्तान्तबोधकाः लघुकथादिरूपाश्च लेखविशेषाः पत्रिकान्तरेषु भूयसा दृश्यन्त एवेति नात्र पत्रिकायां तादृशी रीतिरुररीकृता । न हि सर्वासां पत्रिकाणामेकरूपत्वे वाचकमहाशयानां तदवलोकने कुतूहलं स्यात् । अतः पत्रिकान्तरेष्वदृष्टचरी रीतिरेव प्रकृतपत्रिकायां समाश्रिताऽस्ति । पत्रिका चैषा ग्राहकमहाशयानां साहाय्येनैव आत्मानं बिभर्ति, उपतिष्ठते च यथावसरं वाचकानां परिसरम्, प्रगल्भते च सहृदयानां हृदयमनुरञ्जयितुमिति सार्वजनीनमेवैतत् । यद्यस्यां पत्रिकायां वाचकवरेण्याः करुणातरङ्गितां दृशं प्रसारयेयुः यदि च संप्रतितन एकैकोऽपि वाचकः एकैकग्राहकसंयोजने कृताध्यवसायः स्यात् तर्हि महत्सौभाग्यं लभमाना सेयं अचिरादेव मासिकतामात्मन आविष्कुर्वाणा सती यथासमयं संनिदधाना ग्राहकमहोदयानामश्रान्तसेवायां श्रद्धातिशयमाश्रयिष्यति, भविष्यति च तदीयप्रशंसानां भाजनमिति च निश्चप्रचं ब्रूमः ॥

एषा च प्रथमवत्सरस्य अन्तिमसंचिकेति विदितचरमेव स्याद्वाचकमहाशयानाम् । आगामिशंकरजयन्तीतःपरं द्वितीयवत्सरीयप्रथमसंचिका यावता प्रादुर्भविष्यति ततः प्रागेव ग्राहकमहाशयैः अग्रिमं वार्षिकं मूल्यं धनादेश (मणियार्डर) द्वारा यदि प्रेष्येत तर्हि वीपीद्वारा प्रेषणव्यवसायोऽस्माकं न्यूनीकृतः स्यात्; चतुराणकात्मकद्रव्यस्य वृथा व्ययोऽपि परिहृतः स्यात् । यदि धनादेश (मणियारडर) द्वारा वार्षिकं मूल्यं न प्रेष्येत तर्हि गत्यन्तरमलभमाना सेयं वीपीद्वारैव भूतपूर्वग्राहकाणां सविधमुपतिष्ठेत । तदात्वे च उदारतमा ग्राहकमहाशयाः स्वपादमूलमुपसन्नामेनां न प्रत्याचक्षीरन्; न वा परावर्तयेयुरिति च सुदृढं विश्वसिमः । अपूर्वतरग्रन्थमञ्जूषायमाणायाश्चास्याः रूप्यकषट्कात्मकं वार्षिकं मूल्यं नात्यधिकं न वा अननुरूपं नाम । अधुना हि पत्राणां बहुमूल्यतया, ग्राहकाणामल्पसंख्याकतया, दुर्लभतराणां पुस्तकात्मना संयोजनीयानां ग्रन्थानां तत्तत्संचिकास्वनुक्रमेण निवेशितानां सम्यक्परिशोधनपरिष्करणादेरावश्यकतया च द्रव्यव्ययो महान् भवतीति पुस्तकमुद्रणव्यवसायमर्मविद्भिरेव विषयोऽयमवगन्तुं पार्येत । विद्यार्थिनां कृते तु रूप्यकचतुष्टयमेव वार्षिकं मूल्यमिदानीं परिकल्पितमस्ति, ये खलु स्वस्वाचार्यसमर्पितप्रमाणपत्रसनाथामपेक्षापत्रिकां प्रहिणुयुः ॥

अत्र हि प्रथमवर्षीये संचिकाचतुष्टये प्रकटितेषु ग्रन्थात्मकलेखेषु पञ्चरत्नकारिका

कुमारसंभवचम्पूः डमरुकं चेति ग्रन्थत्रितयं सुसंपूर्णमभूत् । नयमञ्जरी बालभारत मयूखावली शृङ्गारप्रकाशनामानो विस्तृतग्रन्थास्तु द्वितीयवत्सरीयाङ्केष्वप्यनुवर्तिष्यन्ते । अन्येऽपि ईदृशाः कुत्राप्यमुद्रितचराः अत्यन्तोपयुक्ता ग्रन्थवराः यदि वाचकमहोदयैरान्विष्य प्रहेष्यन्ते, तर्हि सधन्यवादं तानपि प्रकाशयितुं सकुतूहलाः स्मः । सुललितशब्दसंदर्भगर्भीकृताः विशिष्टार्थपरिपुष्टाश्च स्पष्टलिखिता उपन्यासविमर्शाद्यात्मका लेखा यदि प्रेष्यन्ते वाचकैर्ग्राहकैर्वा तर्हि यथावसरं तानपि पत्रिकायामस्यां प्रकटीकरिष्यामः ॥

अयि वाचकवरेण्याः! संस्कृतसाहित्यसौहित्यप्रचिचारयिषया क्रिमिकीटकबलीक्रियमाणनिर्जीवप्रायबहुतरग्रन्थसमुज्जिजीवयिषया च तदा तदा प्रत्युपस्थितप्रत्यूहसहस्रमप्यपरिगणय्य पत्रिकामेनां प्रकाशयितुमारब्धवतामस्माकं उत्साहन्यूनता वा प्रयत्नशैथिल्यं वा पौनःपुन्येन यथा नोदयमासादयेत् तथा सर्वेऽपि संस्कृतज्ञा यदि प्रयतिष्यन्ते, यदि च ग्राहकसंख्याभिवर्धनेन साहाय्यं करिष्यन्ति, तर्हि अचिरादेव पत्रिकामेनां मासिकीं विधाय यथोचितं ग्राहकाणामानुकूल्यं कल्पयितुं सर्वदा संनद्धाः स्मो वयमिति पुनःपुनरिदमेव निवेदयामः । अभ्यर्थयामहे च भगवन्तं पत्रिकैषा चिरंजीविनी भूयादिति ॥





# ॥ ख्यातिवादः ॥

कल्याणपुरी श्रीशंकरपाठशालाध्यक्षेण वेङ्कटेशशास्त्रिणा विरचितः

---

यत्पादाम्बुजवन्दनाद्धरिहरब्रह्मात्मनां वन्दनं
सिद्धं स्यादिति ते वदन्ति हि गुरुर्ब्रह्मेति पद्यं विदुः ।
यद्भक्त्या कथितार्थभानमनिशं स्याद्यस्य देवे परा-
श्लोकस्याप्तवचस्तया स हि गुरुश्चित्ते सदा भासताम् ॥ १ ॥

तत्तत्तीर्थकरैः कृतौ समुदिता आत्मान्यथाख्यात्यस-
त्सत्ख्यातिप्रमुखा मिथश्च विमुखा अक्षोभ्ययुक्त्यन्विताः ।
ताः सर्वा अपि तैः स्वकीयकृतिषु प्रोक्तास्तु युक्तीरहं
मृष्ट्वाऽनिर्वचनीयरूपपदवीमेकां नये सन्मुदे ॥ २ ॥



अपश्चिमोऽयं विषयो विपश्चितां यत् सर्वेऽपि तीर्थकराः आत्मयाथात्म्यज्ञानं साक्षात् परम्परया वा अपवर्गोपायभूतमाचक्षत इति । तच्च ज्ञानम्, अनात्मज्ञानं विना न संभवतीति अनात्मस्वरूपमवश्यं निरूपणीयम् । तत्र अनात्मप्रपञ्चः सन्नेवेति योगाचारमाध्यमिकाद्वैतवेदान्तिव्यतिरिक्ता दर्शनकारा व्याहरन्ति । योगाचारा इत्थं संगिरन्ते— ज्ञानव्यतिरेकेण बाह्यप्रपञ्चोऽसन्नेव; परं तु अविद्याकल्पितमलीकम् । ज्ञानस्य साकारत्वं व्यावहारिकमिति । माध्यमिकास्तु इत्थमध्यवस्यन्ति— दृश्यप्रपञ्चः संवृतिपरिभाषिताविद्यासिद्धः । आत्मरूपविज्ञानमपि तथैव । वस्तुतः स्थायित्वानुकूलवेदनीयत्वानुगतत्वसर्वसत्यत्वभ्रमव्यावर्तनेन सर्वशून्यतायामेव पर्यवसानमिति । अद्वैतवेदान्तिनस्तु— आत्मव्यतिरिक्तं सर्वमपि तत्तद्वाद्यभिमतेन सत्त्वेन असत्त्वेन वा दुर्निरूपमिति समर्थयन्ते । आर्हतास्तु—

अनेकान्तात्मकं वस्तु गोचरः सर्वसंविदाम् ।
एकदेशविशिष्टोऽर्थो न यस्य विषयो मतः ॥ इति स्याद्वादमञ्जर्युक्तरीत्या सत्पक्ष

असत्पक्ष सदसत्पक्ष अनिर्वचनीयपक्ष असत्वेनानिर्वचनीयपक्ष सत्वेनानिर्वचनीयपक्ष सत्वासत्वाभ्यामनिर्वचनीयपक्षाणां प्रतिपक्षभूतमनेकान्तात्मकं सर्वमिति वदन्ति । तत्र शांकरमतानुयायिनः प्रपञ्चस्यानिर्वाच्यत्वं शुक्तिरजतरज्जुसर्पादिदृष्टान्तमवलम्ब्य व्यवस्थापयन्ति । उक्तदृष्टान्तानिर्वाच्यत्वे च यदि समस्तदर्शनकारा न विप्रतिपद्यन्ते, तदानीं दृश्यानिर्वाच्यत्वं हस्तगतं भवति। एकमेव सद्रूपमिति च सिद्धं भवति। तत्र सर्वेऽपि दार्शनिका विप्रतिपद्यमाना इव दृश्यन्ते। यदि तान् सर्वानपि परीक्षकान् उष्ट्रलगुडन्यायेन तदीयप्रक्रिययैव यावत्प्रपञ्चस्य दुर्निरूपत्वं नाभ्युपगमयामः, तावत् निर्विशङ्कमनिर्वाच्यत्वं न सिद्ध्येत्। तदत्र किंचिदिव लेखनीं व्यापारयामः। शुक्तौ इदं रजतमिति जायमाने भ्रान्तित्वेन दार्शनिकैः व्याह्रियमाणे ज्ञाने भासमानं रजतं किंरूपमिति चिन्त्यते। तत्र केचित् सत्, अपरे असत्, अन्येऽनिर्वाच्यमिति मिथो विरुद्धव्याहारा इव दरीदृश्यन्ते। तदुक्तमिष्टसिद्धौ भगवता विमुक्तात्मना—

रजतं भाति यद्भ्रान्तौ तत्सदेके परे त्वसत्।
अन्येऽनिर्वचनीयं तदाहुस्तेन विचार्यते ॥

अनेकान्तात्मकं सर्वमित्यपि केचन वादिनोऽभिप्रयन्ति। यदि तस्य पक्षत्रयादतिरेकः तर्हि इदं पद्यं तस्याप्युपलक्षणम्। तत्र पक्षत्रयेऽपि संक्षेपत इमा युक्तयः— भ्रान्तौ भासमानं रजतं असन्न भवति। अपरोक्षतया प्रतीयमानत्वात् इति सद्वादिनां युक्ति। सन्न भवति बाध्यमानत्वात् इति असद्वादिनां युक्तिः। भवदभिमताभ्यां परस्परमक्षोभ्याभ्यां युक्तिभ्यां उभयथाऽपि दुर्निरूपमिति अनिर्वाच्यवादिनां युक्तिः। तदुक्तं इष्टसिद्धौ 'असतः ख्यात्ययोगात् सद्बाधायोगादसत्सतः। अनिर्वचनीयं तदिति पक्षेषु युक्तयः ॥' इति। तत्र सत्पक्ष चतुर्धा भिन्नः— आत्मख्यातिः अख्यातिः अन्यथाख्यातिः सत्ख्यातिः इति। यद्यपि इष्टसिद्धौ आत्मख्यातिः अख्यातिः अन्यथाख्यातिरिति सत्ख्यातिस्त्रिधा भिन्नेत्युक्तम्। एतन्मूलभूतशारीरकशंकरभाष्येऽपि अध्यासलक्षणप्रस्तावोक्तस्य 'तं केचिदन्यत्र अन्यधर्माध्यास इति वदन्ति। केचित्तु यत्र यदध्यासः तद्विवेकाग्रहनिबन्धनो भ्रम इति। अन्ये तु यत्र यदध्यासः तस्यैव विपरीतधर्मत्वकल्पनामाचक्षते' इति वाक्यत्रयस्य मध्ये प्रथमवाक्यं रत्नप्रभान्यायनिर्णययोः अख्यात्यन्यथाख्यातिपरत्वेन, द्वितीयवाक्यं अख्यातिपरत्वेन, तृतीयवाक्यं रत्नप्रभायामसत्ख्यातिपरत्वेन, न्यायनिर्णये तु भावान्तराभाववादिभट्टाभिमतान्यथाख्यात्यसत्ख्यातिपरत्वेन व्याकारि। भामत्यां तु प्रथमवाक्यं आत्मख्यातिपरत्वेन, द्वितीयं अख्यातिपरत्वेन, तृतीयं अन्यथाख्यातिपरत्वेन निरवर्णि। 'परत्र पूर्वदृष्टावभासः' इत्यध्यासलक्षणवाक्यस्थावभासपदेन असत्ख्यातिनिराकरणसूचनात् पूर्वोक्तवाक्यत्रये तन्मतं नोपाक्षेपि। तथाऽपि सत्ख्यातेः कथंचिदन्यथाख्यातिमध्येऽन्तर्भावमभिप्रेत्य सा पृथक् नावादि। इयांस्तु विशेषः। अन्यथाख्यातिवादिनस्तु पुरोवर्तिशुक्तिकादौ दोषादिवशात् देशान्तरस्थं रजतं भासत इति ब्रुवन्ति। सत्ख्यातिवादिनस्तु तत्रैवोत्पद्यमानं विद्यमानं वा दोषवशात्कदाचिदवभासत इति वर्णयन्ति। एतत्तत्वमुत्तरत्रोपपादयिष्यामः। यदि च सत्ख्यातिः पृथक्त्वेनैव वक्तव्येत्याग्रहः तर्हि इष्टसिद्धिकारीयं वाक्यं सत्ख्यातेरप्युपलक्षणम्। अत एव भामतीव्याख्यानकल्पतरौ—

अथवाऽसंनिधानेन सत्ख्यातिरिह वारिता ।
अवभासादसत्ख्यातिर्नृश्रृङ्गे तददर्शनात् ॥

इत्यस्य भाष्यस्थस्मृतिरूपावभासपदप्रयोजनकथनपरस्य व्याख्याने परिमले, 'तत्र असंनिधानेन असत्ख्यातिव्यतिरिक्ताख्यात्यादिसकलसत्ख्यातिवारणम्' इत्युक्त्वा, 'तथा च अख्यात्यन्यथाख्यातिमतयोः देशान्तरस्थमधिष्ठानम्, आत्मख्यातिमते ज्ञानम्, सत्ख्यातिमते पुरोवर्तिशुक्त्यादिकम्, अस्मिन् मतचतुष्टयेऽपि सदेव रजतादिकं तत्तदधिष्ठानसमसत्ताकम्' इत्यादिग्रन्थेन कल्पतरुस्थसत्ख्यातिपदं चतुर्विधसत्ख्यातिपरतया व्याख्यातम्। अद्वैतानन्दाचार्यैः 'परत्र पूर्वदृष्टावभासः' इति भाष्यस्थाध्यासलक्षणवाक्यस्य अधिष्ठानविषमसत्ताकावभासत्वरूपनिष्कृष्टार्थपरत्वमुपवर्ण्य, अधिष्ठानविषमसत्ताकत्वेत्यनेन ख्यात्यन्तरवैषम्यं सूच्यत इत्युक्त्वा, अधिष्ठानावभासपदाभ्यां निरधिष्ठानासत्ख्यातिसाधिष्ठानासत्ख्याती व्यावर्त्येते इत्युक्त्वा, सत्ख्यातिपक्षमुपपाद्य भाष्यकारहृद्गतं दूषणमुद्घाटि। सर्वथाऽपि असत्ख्यातिः, सत्ख्यातिः, आत्मख्यातिः, अख्यातिः, अन्यथाख्यातिः, अनिर्वचनीयख्यातिः इति षड्ख्यातयः; अनैकान्तिकख्यातिरप्यतिरिक्ता चेत् सन्तु सप्तख्यातयः। तत्र सर्वा अपि ख्यातयः विमृश्यमानाः अनिर्वचनीयख्यातिपर्यवसायिन्य एव भवेयुः। ये तावत् सत्ख्यातिवादिनः तैः असत्ख्यातिवादिघोषिताः सत्ख्यातिखण्डनधुरीणा युक्तीः निराकर्तुमपारयद्भिः सद्वैलक्षण्यमवश्यमभ्युपेयम्। एवमसत्ख्यातिवादिभिरपि सत्ख्यातिवाद्युद्भावितान् हेतून् प्रतिषेद्धुमसमर्थैः असद्वैलक्षण्यमभ्युपगमनीयम्। तथा च 'विवदत्स्वेव निक्षिप्य विरोधोद्भवकारणम्। तैः संरक्षितसद्बुद्धिः सुखं निर्वाति वेदवित् ॥' इत्युक्तरीत्या अनिर्वाच्यत्ववादी स्वपक्षमनायासेन समर्थयितुं समीष्टे। किं च सदसद्वैलक्षण्यसमुदायवत्त्वम् अद्वैतिनां शुक्तिरजते संमतम्। तत्रासद्वैलक्षण्यं सत्ख्यातिवादिनः संमन्यन्ते। सद्वैलक्षण्यं तु असत्ख्यातिवादिनः। एवं च प्रस्थानान्तरप्रख्यातयत्समुदायघटकैकदेशः यस्याचार्यस्य समतः एकदेशान्तरघटितनत्समुदायोऽपि तस्याचार्यस्य संमत इतीयं व्याप्तिः 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति प्राचीनाचार्यपरिभाषार्थे गतिकारकोपपदानां सुबुत्पत्तिपूर्वं कृदन्तेन समासानां समुदायरूपे घटके, उपपदस्य तथा समासरूपैकदेशे पाणिनिसंमते, उक्तेतरैकदेशान्तरघटितपाणिनिसंमततत्समुदायके प्रसिद्धा। तथा च सामान्यतः सर्वख्यातेः अनिर्वचनीयपर्यवसायित्वं सिद्धं भवति ॥

एवं विशिष्यासत्ख्यात्यादिविमर्शे ताश्च ख्यातयः अनिर्वचनीयख्यातिपदवीमेव प्रविशन्ति। तत्र माध्यमिकाभिमतनिरधिष्ठानासत्ख्यातिपक्षः विमर्शपदवीमाटीकितुं नेष्टे। स च पक्षः आनन्दतीर्थाभिमतासत्ख्यातिविमर्शेनैव विमृष्टो भवतीति तत्र नातीव यत्न आस्थीयते। समस्तसामर्थ्यशून्यमपि विषयमनादौ संसारे स्वसमानाकारपूर्वपूर्वप्रत्ययसामर्थ्यमहिम्ना तदधीनस्वरूपसत्त्वाक्रान्तं स्वरूपतः सत्त्वशून्यं ज्ञानमेव प्रकाशयति। ज्ञाने च स्वभावतः असत्प्रकाशनशक्तिर्विद्यते। सा च तन्मते अविद्याशब्देन भण्यते। कुतः असत एव प्रकाशनशक्तिरित्याग्रह इति चेत्—योगाचारेण ज्ञानव्यतिरेकेणार्थानां असत्त्वे या युक्तयः उद्भाविपत, ताश्च ज्ञानस्य असत्त्वमपि समर्थयितुं समीशत इति ज्ञानधर्मभूतस्य रजतस्य योगाचाराभिमताविद्याकल्पितशुक्तिरूपाधिष्ठाने

भानासंभवादसदेव भातीत्यभ्युपगन्तव्यम् । एवं चाधिष्ठानमारोप्यं सर्वमपि संवृतिशब्दिताविद्याविलसितमिति निरधिष्ठानासत्ख्यातिरित्याख्यायते । इत्याभाषन्ते ॥

तन्मतमयुक्तमिव । ज्ञानस्यासत्प्रकाशनशक्तिर्या भवद्भिरभ्युपगता, तस्याः शक्यमसदिति चेत्, किं तस्याः कार्यमाहोस्वित् ज्ञाप्यम्? नाद्यः; असतः कार्यत्वमभ्युपगच्छतः सर्वपरीक्षकपरिहास्यतैवापद्येत । न द्वितीयः; ज्ञाप्यमित्यस्यापि ज्ञानविषयीभूतमित्यर्थः । एवं च असत्प्रकाशनशक्तिज्ञाप्यमित्युक्ते असत्प्रकाशनशक्तिजन्यज्ञानविषयीभूतमित्यर्थः संपद्यते । तत्रासत्प्रकाशव्यतिरेकेण ज्ञानान्तरं नोपलभ्यते । यदि तावज्ज्ञानान्तरमुपलभ्यत इति शपथः क्रियेत, तादृशज्ञानस्य असतश्च प्रकाशकप्रकाश्यभावसंपत्तये तस्मिन्नपि ज्ञाने असत्प्रकाशनशक्त्या भाव्यम् । तादृशशक्तेः शक्यभूतमसत् कार्यं वा ज्ञाप्यं वेति विकल्पपिशाच्या उत्सारयितुमशक्यत्वात् अन्ततो ज्ञाप्यत्वपक्षावलम्बने अनवस्थात्मिका दुरवस्था नैव हातुं पार्येत ॥

विज्ञानस्वभाव एवासत्प्रकाशनशक्तिरिति यद्युच्यते, तर्हि ज्ञानासतोः संबन्धो भवता निरूपणीयः । यदि असदधीननिरूपणत्वमेव संबन्धः कथ्यते, तदा स्पष्टमाविष्कृतं तीर्थकरत्वं भवता । यतः असतः प्रकाशादिरूपमुपकारमजनयतो ज्ञानस्य असद्रूपविषयाधीननिरूपणाख्य उपकार आधीयते इति सर्वतीर्थकरासंमतार्थं समर्थयितुं प्रयतते भवान् । असद्रूपं विषयं विना प्रत्ययो न प्रथत इति हेतोरसतः प्रत्ययस्य च अविनाभावः संबन्ध इति यदुच्यते, तदपि भवत्प्रक्रियाविरुद्धम् । भवन्मते तदुत्पत्तितादात्म्ययोरन्यतरस्मिन्न एवाविनाभाव उपेयते । न हि ज्ञानासतोरुत्पाद्योत्पादकभावः तादात्म्यभावो वा विद्यते । अतो ज्ञानासतोः संबन्धस्य दुर्निरूपत्वात्— असत् ज्ञाने प्रकाशते— इत्युक्तिर्दुरुक्तिरेव स्यात् ॥

निरधिष्ठानभ्रमोऽपि न तीर्थकरसंमतः । यस्मिन्कस्मिंश्चित्सिद्धे अधिष्ठाने अन्यस्यारोप्यस्य दोषवशाद्भ्रम इति सर्वेऽपि तीर्थकरा ऐककण्ठ्यं भजन्ते ॥

किं च; असतो विकल्पविषयत्वेऽपि 'अत्यन्तासत्यपि ज्ञानम्' इत्युक्तरीत्या शाब्दबोधविषयत्वमिव अपरोक्षप्रतीतिविषयत्वमनुभवविरुद्धम् । अनुभवविषयत्वे नृशृङ्गस्यापि अपरोक्षप्रतीतौ भानं भवेत् । ओमिति ब्रुवतः दर्शनकारबहिष्कार्यत्वमेव स्यात् । मणिकारश्च— 'गवि शशशृङ्गं नास्तीति प्रतीतेरेवासिद्धेः' इत्यचकथत् । योगसूत्रकारैरपि— 'प्रमाणविपर्ययविकल्पनिद्रास्मृतयः'— इति सूत्रे विकल्पाख्यामतिरिक्तां वृत्तिमभ्युपगच्छद्भिः तद्विषयत्वमेवानुमन्यते । न तु विपर्ययादिप्रतीतिविषयत्वम् । किमङ्ग पुनरपरोक्षप्रतीतिविषयत्वम्? लघुचन्द्रिकायां ब्रह्मानन्दैरपि असतो विकल्पप्रतीतिविषयत्वमेव महता यत्नेन प्रासाधि । मञ्जूषायां नागेशभट्टेनापि— 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि ।' इति कारिकानुसारेण बौद्धानां तदभ्युपगतपदार्थानां शाब्दबोधविषयत्वमेवाङ्गीकारि । एवं च सर्वतीर्थकरानभिमतं विषयं प्रसाधयितुं प्रवृत्तो भवान् उपहास्यपदवीमाढौकेत । आस्तामयं विषयः । एवं च माध्यमिकेनाकामेनापि असद्वैलक्षण्यमेव प्रतीयमाने रजते एष्टव्यम् ॥

एतेन यदवादि आनन्दतीर्थानुयायिभिः जयतीर्थैः न्यायसुधायाम्— शुक्तिरजतादौ सदसद्वैलक्षण्ये अभ्युपगन्तुं न पार्यते, असत्त्वात्— इति समार्थते स्वपक्षे अद्वैतसिद्धान्ती इत्थं प्रत्यवतिष्ठते। शुक्तिरजतस्यासत्त्वं यदभाणि तदयुक्तम्, असतः प्रतीत्यसंभवात्; अस्य च प्रत्यक्षतया प्रतीयमानत्वादिति। तदुपरि एवं समाधातुं ते उत्सहन्ते। स्यादेवं प्रतीतत्वहेतुना शुक्तिरजतादेरसत्त्वाभावानुमानं, यदि 'असच्चेन्न प्रतीयेत' इति व्याप्तिः सुदृढा स्यात्। नैव सा व्याप्तिर्दृढिमानमत्रलम्बितुमुत्सुकूक्ते। त्वन्मतेऽपि असतः प्रतीतिरभ्युपगन्तव्यैव। अन्यथा असद्वैलक्षण्यघटिता- निर्वाच्यत्वज्ञानमपि न स्यात्, वैलक्षण्यज्ञाने प्रतियोगिज्ञानस्यावश्यकत्वात्। तथा च विमतः अद्वैतवादी असत्प्रतीतिमान्, असद्वैलक्षण्यप्रतीतिमत्त्वात्। यो यद्वैलक्षण्यप्रतीतिमान्स तत्प्रतीतिमान; यथा घटवैलक्षण्यप्रतीतिमान् घटप्रतीतिमान्। असदपि प्रतीयत इत्यभ्युपगमे नरविषाणस्यापि प्रतीत्यापत्तिरिति खलु भवतामापत्तिः। अत्र किंचिद्विचार्यते। नरशिरसि विषाणमस्तीति वाक्यं तव बोधकं न वा? आद्ये स बोधः सद्विषयो वा असद्विषयो वा? तत्रापि प्रथमे पक्षे बाधाभावः; द्वितीये तु असतः प्रतीतिः सिद्धा भवति। न च— तत्सच्चासच्च न भवति, किं त्वनिर्वाच्यमिति वाच्यम्, निराकृतत्वात्। किं च; शशविषाणमसन्न भवति चेत्तर्हि शुक्तिरजतस्य असद्वैलक्षण्यं कथं कथ्यते? असत एव तवाप्रसिद्धत्वात्। निरुपाख्याद्वैलक्षण्यमेवासद्वैलक्षण्यमिति चेत्, तर्हि तद्वैलक्षण्यं सोपाख्यमेवेति तदस्माकमपि संमतमेव। यत्तु— नरशिरसि विषाणमस्तीति वाक्यात्प्रतीतिरेव न जायते, किं तु विकल्पमात्रम्। तदुक्तं भगवता पतञ्जलिना— 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति। तत्र किंचिद्विचार्यते। कोऽयं विकल्पो नाम ज्ञानमन्यद्वा? ज्ञानं चेद्वस्तुशून्य इति कोऽर्थः? किमप्यनुल्लिखन्, असदेवोल्लिखन्निति वा? आद्यः अनुभवविरुद्धः। न हि विषयानुपरक्तं ज्ञानं अनुभवसिद्धमस्ति। द्वितीये सिद्धं नः समीहितम्। अन्यदिति पक्षे अनुभवविरोध एव। विमतानि पदानि अन्वयप्रतिपत्तिजनकानि, आकाङ्क्षासंनिधिमत्पदत्वात्, गामानयेति पदवत् इत्यनुमानविरोधश्च प्रसज्येत। न च असतः भाति भाम्यत इति कर्तृत्वं कर्मत्वं च कथमिति वाच्यम्। समस्तसामर्थ्यरहितत्वादिति यदुच्यते तदपि समस्तसामर्थ्यरहितत्वं कथम्? अभावस्यापि भावस्येव सद्धर्मत्वदर्शनात्। अभावाश्रयत्वं बौद्धं चेत्समं कर्तृत्वकर्मत्वयोरपि। अतः असतः प्रतीत्यभाव एवासिद्धः। ननु— नासतः प्रतीतिरेव निषिध्यते, किं त्वपरोक्षप्रतीतिः। रजतस्य चापरोक्षतया प्रतीयमानत्वान्नासत्त्वमिति चेत्? उच्यते— रजतादिकमनिर्वचनीयमित्यभ्युपगच्छता भवता तयोस्तादात्म्यावभासोऽङ्गीक्रियते। तच्च तादात्म्यमसदित्येवाङ्गीकार्यम्। एवं चासतः प्रतीतिरायाता। यद्यन्यथात्वरूपः शुक्तिरूप्येदमंशसंसर्गोऽपि अनिर्वचनीय इत्येवाभ्युपगम्यते, नासन्, तदा अनवस्थादोषः स्यात्। तथा हि— संसर्गद्वयमनिर्वचनीयमिति कोऽभिप्रायः? किं व्यावहारिकमुत प्रातिभासिकम्? नाद्यः, अनङ्गीकारात्। द्वितीये प्रातिभासिकतयैव प्रतीयते व्यावहारिकतया वा? नाद्यः, प्रवृत्त्यभावप्रसङ्गात्। द्वितीये व्यावहारिकता सती वाऽसती वा? नाद्यः, प्रातिभासिकत्वानुपपत्तेः। द्वितीये असतोऽपि अपरोक्षतया सत्त्वेन च प्रतीतिः प्रसज्येत। अथ सा व्यावहारिकताऽपि अनिर्वचनीयेत्युच्यते, तदा अनिर्वचनीयेति कोऽर्थः? इति आरोपपरम्परापर्यवसानानवस्था स्यात्। इत्यादिकं सर्वमपास्तम्॥ (क्रमशः)



॥ श्रीः ॥

कारिकावलीसंवलितस्य पञ्चरत्नाख्यलघुप्रबन्धस्य

# ॥ प्रस्तावना ॥

संसारसागरोदरकुहरादात्मानमुद्दिधीर्षसि चेत् ।
शंकरगुरुवरसुचरणपङ्केरुहयुगलकिंकरो भूयाः ॥




ह हि वसुंधरावलये भारतभूविभागभूषणायमानाः भगवदंशभूताः कति कति महात्मानो जगदुद्दिधीर्षया स्वयमवतीर्य सर्वतः प्रसृमरेण स्वयशोराशिधवलिम्ना सर्वमेव दिङ्मण्डलं मण्डयन्तः पवित्रीचक्रुरिदं धरित्रीतलमिति विदितचरमेव स्याद्विश्वतोमुखवैदुषीकाणां विमर्शकाग्रेसराणाम् । तत्तादृशाश्च ते महात्मानो नूनं भगवदंशभूता एवेत्यत्र नास्ति हि विशयलेशस्याप्यवकाशः, 'यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम्' इत्यादिभगवन्मुखारविन्दविनिर्गतगीतावचनप्रामाण्यात् । भगवत्पादानामवतारस्तु न तथा अंशतामात्रमाकलयति । इदं च तदीयपवित्रतमचरित्रवेदिनां स्फुटमेव । न केवलमेतावदेव, अपि तु पूर्णावतारभूतरामकृष्णाद्यवतारापेक्षयाऽपि भगवत्पादीयावतारस्य धर्मसंस्थापनकृत्ये तद्द्वारा सर्वलोकसमुद्धरणकर्मणि च सुतरामतिशयानता सुधीजनधीगम्यैव। तथा हि— रामकृष्णाद्यवतारप्रसङ्गेषु हि रावणशिशुपालादयो बाह्यरिपवः स्वबाहुबलेनैव इन्द्रचन्द्रादिदेवताः स्ववशीकृत्य त्रिलोकीमप्यात्मसात्कृत्य स्वच्छन्दचारिणः सन्तो लोके महीयसीं धर्मग्लानिमुदपीपदन्निति तदुपशिशमयिषयैव तादृगवतारा: प्रावर्तिषत । भगवत्पादानामवतारस्तु नैवं बाह्यशत्रूणामुपमर्दनाय परं प्रावर्तिष्ट । यद्यपि वैदिकधर्मसमुज्जिजीवयिषाऽपि रामकृष्णाद्यवतारे हेतुरासीदेव तथाऽप्यस्त्येव कश्चिदतिशयो भगवत्पादीयावतारे । तमेवातिशयं पुरस्तान्नातिविस्तरं प्रस्तोष्यामः ॥

पुरा हि द्वापरावसाने भगवान् यदुनन्दनः स्वावतारकृत्यं सुसंपूर्णमाकलय्य वैकुण्ठलोकजिगमिषया यदा भूतलमिदं विहातुमुदयुङ्क्त तदाप्रभृत्येव कलिरपि सर्वतः समाक्रम्य क्रमेण

स्वपराक्रमलीलामुपाक्रमत । तदात्वे हि आभिचारिककर्माण्यपि वेदविहितत्वभ्रमेण भूयसा प्राचीचरन् भूसुरवराः, उपाक्रमन्त निर्बाधं नरमेधम्, आरभन्त सविस्रम्भं गवालम्भम्, अन्वतिष्ठन् पशुपिशितैः पैतृकाणि कर्माणि, प्रावीवृतन्निर्दयं नरबलिसंप्रदायम् । तदित्थं वैदिकानामपि तदानींतनानां वेदविहितत्वभ्रमादुपनतां प्राणिहिंसापद्धतिमनिवार्यामाकलय्य तादृशहिंसाकर्मणां समूलमुन्मुमूलयिषया सर्वप्राणिपरिपिपालयिषया च तत्कालोचितां कर्तव्यरीतिमनुसंदधानो हि भगवान् स्वयं बुद्धरूपेणावतीर्य परिगृह्य च बहून् शिष्यजनान्, तत्तद्विनेयबुद्धिपाटवानुसारेण सौत्रान्तिकवैभाषिकयोगाचारमाध्यमिकरूपेण प्रस्थानचतुष्टयात्मना भिन्नं अहिंसावादसाधकं बौद्धशास्त्रं सर्वतः प्राचीचरत् । उदजूघुषच्च स्वशिष्यप्रशिष्यद्वारा सर्ववेदानामप्रामाणिकताम । ज्योतिष्टोमादिकतिपययज्ञबोधकवाक्यानां परं प्रामाण्याङ्गीकारे तुल्ययुक्त्या 'ब्रह्मणे ब्राह्मणमालभते, क्षत्राय राजन्यम्' इत्यादिनरमेधविधायकवाक्यानां परं कुतो न प्रामाण्यं स्यात्? प्राणिहिंसाया उभयत्र अविशेषात् इति आशङ्का आक्षेपाश्च वैदिकानां नियतमपरिहार्या एव भवेयुरिति पर्यालोच्य तत्कालिकनरमेधादिसंप्रदायव्यावर्तनं सर्ववेदानामप्रामाण्यसमर्थनं विना न सेत्स्यतीति संचिन्त्य गत्यन्तराभावात् बुद्धमुनिना तादात्विक्यां परिस्थित्यां अविशेषेण सर्ववेदानामप्रामाण्यसमर्थनमेव कर्तव्यमापतितम् ॥

अत एव भगवदवतारभूतस्यापि बुद्धमुनेः वेदाप्रामाण्यवादव्यवस्थापकता कथमुचिता इति शङ्काऽपि समुन्मिषन्ती प्रागुक्तयुक्त्यैव परिहरणीया । कथमन्यथा भगवदवतारभूतोऽपि बुद्धमुनिः वेदप्रामाण्यं प्रतिक्षिप्य नास्तिकमतविस्तरणे न्यस्तादरः स्यात्? तस्मात् वेदप्रामाण्यमङ्गीकुर्वाणोऽपि बुद्धमुनिः वेदप्रतिपादितनरमेधगवालम्भादीनां युगान्तरविषयत्वं कलिवर्ज्यत्वं च पराशरकुमारिलादिभिर्यावता स्फुटीकरिष्यते, तावत्पर्यन्तं वेदे प्रामाण्यबुद्धिः किंचिदिव संकोचयितव्यैवेति मन्वानः तत्कालिकवैदिकसंप्रदायागतानां च गवालम्भनरमेधादीनां दूरतो निवारणाय अविशेषेण सर्ववेदानामप्रामाण्यसमर्थनमेव साधीयानुपाय इत्यनुचिन्त्य वेदाप्रामाण्यसाधकं अहिंसाप्रधानं नास्तिकप्रस्थानात्मकं बौद्धशास्त्रं तादात्त्विकदेशकालपरिस्थित्यनुसारं लोके प्रचारयामास इत्येव समर्थनीयम् ॥

अथवा 'ततः कलौ संप्रवृत्ते संमोहाय सुरद्विषाम । बुद्धो नाम्ना जिनसुतः कीकटेषु भविष्यति ॥ देवद्विषां निगमवर्त्मनि निष्ठितानां पूर्भिर्मयेन विहिताभिरदृश्यतूर्भिः । लोकान् घ्नतां मतिविमोहमतिप्रलोभं वेषं विधाय बहु भाष्यत औपधर्म्यम् ॥' इत्यादिभागवतवचनानुसारेण कलियुगारम्भे मानुषं रूपमास्थाय वैदिकं मार्गमवलम्बमानानामसुराणां वैदिकमार्गोद्भ्रंशनाय तत्संमोहनं कर्तुं तद्द्वारा सुराणामानुकूल्यमुत्पादयितुं च भगवान् नारायणो बुद्धमुनिरूपेणावतीर्य वेदाप्रा-

माण्यं साधयितुं नास्तिकवादपर्यवसितं बौद्धशास्त्रं प्रणिनाय इत्येव वा समर्थनीयम् । कथंचिदपि वा अहिंसातत्त्वे प्रतिष्ठिते तद्द्वारा लोकव्यवस्थायां च सुस्थिरायां पुनरपि वेदमार्गप्रवर्तनार्थं कुमारिलभगवत्पादादयो भुवमवतीर्य वैदिकमतं तत्काले खिलीभूतमपि पुनः प्रवर्तयिष्यन्तीत्येव बुद्धमुनेरप्याशयः स्यात् । न हि सर्वेष्ववतारेषु सर्वप्रयत्नेनापि वेदप्रामाण्यं समर्थयमानो भगवान् बुद्धावतारे परं तत्प्रामाण्यप्रतिक्षेपणे वस्तुतस्तात्पर्यवान् स्यात् । अतो बुद्धमुनेरपि वेदप्रामाण्ये आन्तरं तात्पर्यमासीदेवेति नात्र खलु मात्रयाऽपि संशीतिः ॥

तदित्थं बुद्धमुनिना अहिंसावैराग्यादिसमुद्बोधकस्य शून्यवादान्तस्य नास्तिकशास्त्रस्य प्रचारणेन यद्यपि पारस्परिकहिंसाप्रयुक्ता अव्यवस्था लोके परिहृता, तथाऽपि तत्प्रचारातिशयेन वेदशब्दस्यैव नामावशेषतां वैदिकमार्गस्य सर्वथा लुप्तप्रायतां च समवलोकयता अत एव स्वावतारं प्राप्तावसरमुदीक्षमाणेन भगवता शंकरेण प्रथमतः कर्मकाण्डोद्धरणार्थमादिष्टः षडाननः कुमारिलभट्टरूपेणावतीर्य बौद्धशास्त्रं समग्रं खण्डयित्वा निर्जीवप्रायं वैदिकधर्मं पुनरुज्जीवयामास । तदेवं कुमारिलभट्टेनैव यद्यपि कर्मकाण्डात्मकवेदस्य कर्ममार्गस्य च सर्वतः प्रचारणमकारि तथाऽपि 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति' इत्यादिश्रुत्यनुसारेण केवलयज्ञादीनां सांसारिकफलप्रापकतया परमानन्दावाप्तिलक्षणमोक्षं प्रति स्वातन्त्र्येण असाधकतया च 'ज्ञानादेव तु कैवल्यम्' 'तरति शोकमात्मवित्' 'तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इत्यादिश्रुतिभिः औपनिषद्ब्रह्मात्मतत्त्वज्ञानस्यैव मोक्षसाधनत्वस्फुटीकरणाच्च कर्मकाण्डप्रामाण्यप्रसाधनमात्रेण मुमुक्षूणां नैकान्तिकपुरुषार्थप्राप्तिः स्यादिति पर्यालोच्य ज्ञानकाण्डप्रामाण्यप्रतिपादनपुरःसरं मुमुक्षूणां तत्र प्रवृत्तिमुत्पादयितुं तद्द्वारा सर्वानपि संसृतिसागरात्समुद्धर्तुं नान्यः कश्चित्प्रभविष्यतीत्यनुचिन्त्य भगवान् शंकरः स्वयमेव शंकराचार्यात्मना भुवमवतीर्य, प्रकटय्य स्वीयां पारमेश्वरीं विभूतिम्, प्रदर्श्य स्वीयालमानुषलीलाविशेषान्, निबध्य नानाविधं निबन्धजातम्, मण्डयित्वा भूमण्डलीमात्मसंचारेण, खण्डयित्वा च वैतण्डिकवादप्रचुरं पाषण्डमतम्, अनुगृह्य स्वपादमूलमुपसन्नानन्तेवासिजनान्, अध्याप्य च स्वकृतभाष्यग्रन्थान्, आविष्कृत्य च तद्द्वारा श्रुत्यन्तसिद्धान्तम्, प्रतिष्ठाप्य चतुर्दिक्षु चतुरो मठान्, अवस्थाप्य च तत्र स्वीयांश्चतुरो मुख्यशिष्यान्, प्रसार्य तद्द्वारा वैदिकधर्मान्, प्रवर्त्य च तन्मूलतो ब्रह्मविद्यासंप्रदायम्, प्रचार्य सर्वतः स्वकृतान् सर्वजनीनानुपदेशसारान्, अनुभाव्य च प्रत्यस्तमितभेदानुभवां जीवन्मुक्तसुखातिशयवैखरीम्, आकलय्य स्वावतारकृत्यं सुसंपूर्णम्, स्वयमपि मानुषीं लीलामनुकुर्वाण इव द्वात्रिंशत्तम एव वयसि निरायासममन्दानन्दसंदोहसंपदुल्लसितां कैलासवसतिमुररीचकारेति संसारसिन्धुतारित्रं पवित्रं तदीयं चरित्रं धरित्रीतले सर्वत्र

प्रथितमेव । यद्येते भगवत्पादाः तदात्वे स्वयं नावातरिष्यन्, यदि च तदा वैदिकधर्मं नोदजीवयिष्यन्, यदि वा अद्वैतसिद्धान्तं न प्रत्यष्ठापयिष्यन्, तर्हि नायमविच्छिन्नसंप्रदायो वेदः सांप्रतं स्मर्तुमप्यलप्स्यत, तथा च कुतो धर्मस्वरूपयाथात्म्यावगमः? कुतस्तरां वैदिककर्मानुष्ठानम्? कुतस्तमां च तद्द्वारा मुक्तिसोपानसमारोहणम्? अहो! महती लोकानुग्रहव्यसनिता भगवतः शंकरस्य ॥

अत एव हि भगवत्पादीयावतारे रामकृष्णाद्यवतारापेक्षया महद्वैलक्षण्यमुपलक्ष्यते । न हीमे भगवत्पादाः रामकृष्णादिवत् प्रवृत्तिमार्गप्रवणतां क्वचित्प्राचीकटन्, न क्वचित् स्वबाहुबलं प्रादीदृशन्, न जातु शस्त्रास्त्रसंनाहे स्वयं व्याप्रियन्त, न क्वचन बाह्यशत्रुहिंसादौ प्रावर्तन्त, न क्वापि राज्यपरिपालनप्रक्रियायां प्रावर्तिषत, न कदाऽपि क्षात्रधर्मं कुहचिदुपाश्रयन्त, न वा जनधनसाहाय्यं स्वकार्यार्थं निरैक्षन्त । रामकृष्णादयो हि धर्मव्यवस्थापनौपयिकं यत्कार्यं महता सैन्यसंभारेण महीयसा शस्त्रास्त्रसंनाहेन भूयसा कोशव्ययेन विशालेन समरकौशलेन च कथंचित्समसाधयन्, तदेव वा ततोऽप्यधिकतरं वा महत्कार्यं परमाचार्या इमे सहृदयहृदयंगमया सरसया उपदेशशैल्यैव निरवर्तयन्निति नात्र स्तोकोऽपि संशयावसरः । अनया हि उपदेशशैल्या आन्तरवैरिणः कामक्रोधादयोऽपि सुनिग्रहा एव संवृत्ताः । बाह्यशत्रुनिबर्हणापेक्षयाऽपि आन्तरशत्रूणां निबर्हणमेव हि दुष्करं नाम । निरस्ता अपि हि बाह्यरिपवः स्वसंततिरूपेण वा जन्मान्तरीयविग्रहपरिग्रहद्वारा वा दुर्निग्रहाः सन्तः पुनरपि बाधामेव नूनं विदधीरन् । आन्तरशत्रूणां समूलमुन्मूलने तु नैवं पौनःपुनिकबाधाया अवसरः स्यादित्यनुचिन्त्यैव भगवान् परमकारुणिकः परमेश्वरः आन्तरवैरिणां कामादीनां अज्ञानैकमूलकतामनुचिन्त्य तादृगज्ञानविपवीरुधां आस्तिकजनचित्तस्थलीष्वपि चिरतररूढमूलानां समूलमुन्मूलनमेवात्र साधीयानुपाय इत्यनुसंदधानः परुषतरकलिपौरुषविषविशेषविवशीकृतचेतसां पुरुषाणां विषवेगाशिशमयिषया तदुचितभेपजायमानं पीयूपविशेषमात्मज्ञानाख्यं निखिलश्रुतिपयोधिनिर्मथनादाविश्चिकीर्षमाणः, आम्नायार्थेष्वयथार्थवर्णनसमारम्भिणां सर्वमपि संभ्रमं ससंरम्भं सावष्टम्भवचननिचयेन युक्तिगाढनिगूढार्थकवाक्यप्रौढिम्ना च सुधीरमवधीर्य, नास्तिकानपि तत्तदुचितदृष्टान्तविशेपदृष्टान्तरज्ञान्विधाय निगमान्तसिद्धान्तं संप्रतितिष्ठापयिषमाणः, तद्द्वारा च सर्वजनानपि साधुमार्गे समवतार्य सर्वानपि संसारसागरात्समुत्तितारयिषमाणः, नानाविधभाष्यनिबन्धान् इतरांश्च ग्रन्थकलापाननल्पानुपकल्प्य तत्काले सर्वतः समेधमानदुर्जयतरनास्तिकवादगर्जितजर्जरितनिर्जीवप्रायनिखिलश्रुतिसमुज्जीवनसज्जीभूतामिव सर्वतः समुज्जिहानां अनिदंप्रथमप्रवृत्तां अतर्कितोपनतां सदुपदेशसारात्मिकां सुधावृष्टिं वितीर्य वैदिकधर्मं समुज्जीवयामास । तदेवं समधिकसांसारिकतापत्रितयपापच्यमानानां संसृतिमरुभूमौ संचरमाणानां

सकलसंतापसमुपशमनीं सरसतरवाङ्मयनिकुरुम्बकराम्बितनिबन्धशतरूपेण सर्वतः प्रसृमरां सदुपदेशामृतधारां सर्वत्र समाकिरन्तो हि भगवत्पादाः कियतीमुपकारपरम्परामतानिषुः? तदर्थं च कीदृशीं क्लेशसंततिमनुबभूवुः? कतिधा च तद्द्वारा जगन्मङ्गलमकार्षुरिति च वाचामगोचरमेव ॥

तदेवमीदृशसदुपदेशात्मकनिबन्धशतनिर्माणालंकर्मीणैः, त्रैलोक्योदरमध्यघटितघनतरघण्ठाघणघणात्कारायमाणवाक्प्रसरणैः सर्वतोविसृत्वररमणीयगुणगणैः पूज्यचरणैराचार्यचरणैः विविधग्रन्थनिर्माणादिव्यवसायेन न केवलमुत्तमाधिकारिणो न च मध्यमाधिकारिणो वा अनुग्राह्यकोटिमुपनीताः, परं तु अज्ञतमा उदरंभरयः पामरा अपि तैरनुगृहीताः। किं बहुना? यः कश्चिद्गोपालो वा अलसशिखामणिर्वा यदि स्यात् तं प्रत्यपि 'भज गोविन्दं भज गोविन्दं गोविन्दं भज मूढमते' इत्यादिस्वारसिकगानोपयोगिपद्यानामुपदेशदानेन तादृशानपि सुतरामन्वग्रहीषुरिमे दीनदयालवो भगवत्पादाः। किमीदृशाश्च द्वित्रा एव सदुपदेशात्मकाः ग्रन्थाः उपनिबद्धाः परमाचार्यैः? अहो नु परःशताः! तदेवमीदृशीमुपकारपरम्परामादृतवताममीषामाचार्यवर्याणां निरवग्रहलोकानुग्रहव्यसनिता कथमिव परिच्छेद्यकोटिमाटीकेत?

एवं भगवत्पादानुगृहीतानां सदुपदेशसारात्मकानां ग्रन्थानां मध्ये अन्यतमोऽयं रत्नपञ्चकनाम्ना प्रथितो निबन्धो लघुरपि बह्वर्थभरितो भवति चिन्तामणिवदिति सूक्ष्मार्थान्वेषणधुरंधरसुधीजनधीमात्रसमधिगम्योऽयमर्थः। अत एवास्य पञ्चरत्ननाम्ना व्यपदेशोऽप्यन्वर्थतामनुविन्दते। अस्यैव उपदेशपञ्चकं सोपानपञ्चकमिति संज्ञान्तरमपि संगिरन्ते संख्यावन्मूर्धन्याः। अतिविशदसद्दुपदेशसमावेशितशरीराणां पद्यानां पञ्चकेन परिकर्मितत्वादेवास्य उपदेशपञ्चकमिति समाख्या संगच्छते। मोक्षसौधमारुरुक्षूणां मुमुक्षूणामर्थे संक्षिप्ततया संकलितानामेषां निःश्रेयसनिश्रेणिकासमाश्रितपरःशतसोपानभेदायमानानां उपदेशानां पञ्चधा प्रविभज्य श्रीमदाचार्यवरमुखकमलप्रादुर्भूतत्वादेव सोपानपञ्चकमित्यप्याचक्षते दाक्षिणात्या विपश्चिदग्रेसराः। स चायं पञ्चश्लोकीरूपो लघुनिबन्धः निखिलश्रुतिपयोनिधिनिर्मथननिष्पादितनव्यनवनीतायमानसदुपदेशसारसंदर्भगर्भीकृतो निर्भयमर्भकैरप्यनुवचनीयसुगमतरशैलीसमुद्भासितः सुकुमाराक्षरसंनिवेशसमावर्जितसर्वजनस्वान्तो विधूतान्तरध्वान्तो विशदीकृताद्वैतराद्धान्तो विश्वजनीनवैभवातिशयश्च सन् कस्य वा सचेतसो नाह्लादयत्यन्तरङ्गम्? कस्य वा श्रोतुरानन्दपरवशतानिबन्धनान् नयनबिन्दून् नोत्पादयति? कस्य वा संसारानलसंतप्यमानं हृदयं न शिशिरीकरोति? कस्य वा निर्विण्णचेतसो निर्वाणसुखं नोपनयति? अहो अन्यादृशी सुकुमारशब्दसंयोजनचातुरी आचार्याणाम्, असामान्यः प्रज्ञाप्रकर्षः, अदृष्टचरी उपदेशवैखरी, अगण्यं सर्वजनसमावर्जननैपुण्यम्, असाधारणी प्रसन्नगम्भीरविविधग्रन्थसंदर्भनिर्माणनैपुणी। अहो! नूनमेते श्रीशंकरस्य अवतारभूता एवेति अमानुषतदीयवैभववेदी को वा विप्रतिपद्येत? आस्तामेतत् ॥

पञ्चरत्ननाम्ना प्रथितस्यास्य लघुनिबन्धस्य सुललितस्यापि बह्वर्थगम्भीरस्य निगूढार्थजातस्फुटीकरणपटीयसी कारिकावलिरपि कर्षतितरां चेतांसि कोविदवरेण्यानाम् । कारिकाश्लोकाश्च खल्विमे सुललितपदविन्यासमधुराः गभीरविचारपरिपूर्णाश्च सन्तः प्रबन्धस्यास्य स्वभावगभीरिमाणमभिव्यञ्जयन्ति । तत्रेदं दिङ्मात्रमुदाहरामः ॥

प्रथमतो 'वेदो नित्यमधीयताम्' इति वाक्यविचारावसरे,

इह तु ब्रह्मचर्याङ्गसाधनेन द्विजोत्तमः ।
स्वाध्यायविधिना सम्यक् तदर्थप्रवणो भवेत् ॥

इत्यारभ्य साङ्गवेदाध्ययनस्यैव सर्वपुरुषार्थमूलतां मोक्षसौधप्रापकसोपानेषु प्रथमसोपानतां च सम्यक्प्रादीदृशन्नमी कारिकाकाराः । शुष्कवेदाध्ययनापेक्षया च शिक्षाव्याकरणाद्यङ्गकलापसहकृतस्यैव तस्य वस्तुतः श्रेयःसाधनत्वम्, 'स्थाणुरयं भारहरः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्' इत्यादिवचनात् । अतो वेदशब्देनात्र साङ्गवेदस्यैव ग्रहणमिति—

साङ्गं वेदमधीत्याथ तथोपनिषदामपि ।
अर्थमापाततो बुद्ध्वा तदनुष्ठानतत्परः ॥

इत्यादिपद्यैः प्रत्यपीपदन् । ततःपरं यावज्जीवादिश्रुत्यवष्टम्भेन युक्त्यन्तरेण च सर्ववेदानां प्रवृत्तावेव तात्पर्यमिति प्रत्यवतिष्ठमानानां मीमांसकानां मतं प्रतिक्षिप्य—

लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्न हि तत्र चोदना ।
व्यवस्थितिस्तत्र विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा ॥

इत्यादिभागवतश्लोकोक्तदिशा सर्ववेदानामन्तिमं तात्पर्यं निवृत्तावेवेति सयुक्तिकं न्यरूपयन्—

तात्पर्यमत्र शृणुत निवृत्तावेव सर्वतः ।
पर्वादिगमने सा तु निवृत्तिरुपयुज्यते ॥

इत्यादिश्लोकैः । तदर्थमेव अपूर्वनियमपरिसंख्याविधीनां स्वरूपभेदमपि ससंक्षेपं संवर्ण्य अन्ततः इतरनिवृत्तिपर्यवसायिनं परिसंख्याविधिमेव प्रकृते स्वयमुररीकार्षुः । इत्थं एकैकवाक्यस्यापि बह्वर्थगर्भितत्वं तत्र तत्र निरूप्य सर्वश्रुतिसामरस्यमुपपादयामासुरमी कारिकाकाराः ॥

इत्थमेव अन्ते 'अथ परब्रह्मात्मना स्थीयताम्' इति वाक्यव्याख्यानावसरे—

सम्यग्विध्वस्ततमसामनावृत्तिः परा मता ।
इमं मानवमित्यादावुपासनपरं विदुः ॥
न स पुनरावर्तत इति श्रौतं वचोऽब्रवीत् ।
मामुपेत्येति भगवानर्जुनायाह सादरम् ॥

इत्यादिना 'अनावृत्तिः शब्दादनावृत्तिः शब्दात्' इति वैयासिकसूत्रतद्भाष्ययोरनुगुणमेवार्थं सप्रपञ्चं न्यरूरुपन्। इत्थं सूत्रभाष्यादीनां परमतात्पर्यविषयीभूतमर्थं नवनीतवत्पिण्डीकृत्य प्रदर्शयितुं यथा पञ्चरत्नाख्यग्रन्थोऽयं प्रवर्तते न तथा कोऽपि प्रकरणग्रन्थः प्रावर्तिष्ट। अतो मन्दमतीनामनुग्रहाय नैतादृशः कश्चन ग्रन्थो भूतो वा भावी वा। अत एव सूत्रभाष्यादि-गभीरार्थकग्रन्थजातस्य तात्पर्यमवधारयितुमपार्यमाणानां मन्दाधिकारिणां केषांचिदन्तेवासिनाम-भ्यर्थनामनुसृत्य तादृशानपि संसृतिपारावारात्सद्य एव समुद्दिधीर्षन्तो भगवत्पादाः सर्वश्रुतिसूत्र-तद्भाष्यप्रकरणादिनिबन्धशतनिगूढार्थनिर्मथननिर्गलितमर्थजातं पञ्चरत्नाख्यरत्नपेटिकायां निक्षिप्य तामेनां शिष्यसात्कृत्य स्वान्तेवासिजनान् अथवा सर्वानेव लोकान् अन्वगृह्णन्निति प्रकृतकारिका-श्लोकैरेवावगम्यते। तदुक्तं कारिकाकारैः—

देहावसानसमये प्रार्थितं त्वधिकारिभिः।
सूत्रभाष्यादिकं श्रोतुमशक्तानां कथं भवेत्॥
ज्ञानं यद्भगवत्प्रोक्तं स्थूलबुद्धिमतां हि नः।
तदा स भगवाञ्छर्वः साक्षाच्छंकररूपधृक्॥
प्राहान्ते पञ्चरत्नाख्यं स्तोत्रं ज्ञानप्रदायकम्। इति।

दक्षिणामूर्तिस्तोत्रस्य तद्विवरणात्मकमानसोल्लासाख्यवार्तिकग्रन्थवदेव पञ्चरत्नाख्यग्रन्थ-स्यास्य कारिकावलिरेषा नूनमपूर्वामेव शोभामुपजनयति। तस्मादस्याः कारिकावल्या अपि वार्तिक-शब्दव्यपदेश्यता नातीव विरुद्धा स्यात्। उक्तानुक्तदुरुक्तचिन्तनात्मकं हि वार्तिकं नाम। इयान् परमस्ति विशेषः। वार्तिकान्तराणि हि दुरुक्तचिन्तनामपि क्वचिदाद्रियन्ते। पञ्चरत्नाख्यग्रन्थे तु दुरुक्तलेशस्याप्यभावेन तच्चिन्ताया एव अलब्धावसरतया नैषा कारिकावलिस्तत्र व्याप्रियते। वार्ति-कान्तरापेक्षया यदि काचन न्यूनता चिकल्पयिषिता स्यात्, तर्हि एषैव न्यूनता प्रकृतपञ्चरत्नका-रिकायाः। प्रणेता चैतस्याः श्रीसदाशिवयतिरेवेत्युन्नीयते। 'रामेन्द्रस्वामिनं वन्दे सच्चिदानन्दवि-ग्रहम्' इति मङ्गलश्लोके स्वगुरोः संन्यासित्वस्य स्फुटीकरणात् असति बाधके स्वस्यापि यतित्वस्य संभावितत्वात्। यद्यपि 'सदाशिवः करोतीमाः पञ्चरत्नस्य कारिकाः' इति नान्दीपद्ये यतिगृहस्थ-साधारणनिरुपपदसदाशिवशब्दप्रयोगात्, गृहस्थस्यापि संन्यासिनिरूपितशिष्यताया असंभावितत्वा-भावाच्च सदाशिवनामाऽयं गृहस्थो वा ब्रह्मचारी वा स्यादित्यपि शक्यशङ्कमेव, तथाऽपि वेदान्तप्रक-रणेषु तत्रापि अपरोक्षानुभूतिदशश्लोकीशतश्लोक्यादिसदुपदेशसारात्मकेषु ग्रन्थेषु संन्यासिकर्तृकव्या-ख्यानामेव भूयसा दृष्टचरत्वात् तत्समानस्कन्धस्य पञ्चरत्नप्रबन्धस्यापि कारिकाकर्तारः तुरीयाश्र-मिण एवेत्यसति बाधके शक्यमेवाध्यवसातुम्। ननु अस्त्येवात्र बाधकम्—

श्रीमद्रामेन्द्रकृपया शिवस्तुलसिवंशजः ।
कारिकाः पञ्चरत्नानामकरोद्धरितुष्टये ॥

इति उपसंहारश्लोके स्ववंशस्यापि संकीर्तनात् संन्यासिनां च स्ववंशसंकीर्तनस्य अयुक्तत्वात् इति चेन्मैवम्; अन्तिमपद्यस्यास्य स्वशिष्यकृतत्वेऽपि बाधकाभावात्, बाधिताध्यासवशेन स्वशरीरपरिशुद्धताद्योतनार्थतया वा प्राक्तनवंशस्मरणस्यापि कदाचित्संभवेन तस्य नात्यन्तविरुद्धत्वात्। वार्तिककारैरपि बृहदारण्यकवार्तिकस्य अन्तिमे श्लोके 'तं वन्देऽत्रिकुलोद्भवम्' इति वाक्येन स्वगुरुनमस्कारावसरे श्रीमच्छंकरभगवत्पादीयपूर्वाश्रमगोत्रस्यापि परामर्शात्। अथवा कारिकाकारोऽयं गृहस्थो वा भवतु यतिर्वा, नास्माकं तत्राभिनिवेशः। विषयमेनं तु विमर्शनैकव्यसनिनो विद्वद्वरा एव विशिष्य विवेचयन्तु। इयता कालेन कुत्राप्यमुद्रितचराणां कारिकाणामासां पञ्चरत्नेन सह समावेशनं तु कनकारविन्दस्य सौरभ्यलाभमनुहरति। सर्वथा कारिकाग्रन्थोऽयं मृदुलया शब्दसंनिवेशवैखर्या, सरलया भावावबोधनचातुर्या, पृथुलया अक्षरश्रेण्या च समुपस्कृतः सन् पञ्चरत्नानामपि महीयसीं शोभामुपजनय्य महान्तमुपकारभरमातनोति संस्कृतज्ञसमाजस्येति नात्र वचनीयं किमप्यस्तीति पिष्टपेषणव्यवसायादस्मादुपरिरंसामहे ॥

तदित्थं कुत्राप्यमुद्रितचराणां क्रिमिकीटकबलीक्रियमाणानां ग्रन्थरत्नानां सुदूरमन्वेषणेन तत इतो मातृकाः संपाद्य तन्मुद्रापणतत्प्रकाशनादिना इयदवधि विद्याव्यसनिभ्यो महान्तमुपकारभरमातन्वानानां श्रीवाणीविलासमुद्रणालयप्रवर्तकानां गुरुभक्तशिखामणीनां आयुरारोग्यैश्वर्याणि वितीर्य द्वारा वितनोतु जगतो मङ्गलं सर्वमङ्गलाजानिरिति गङ्गाधरमनवरतमभ्यर्थयामहे ॥

इति पारमार्थिकपरमहंसानां पादपङ्केरुहपरिचर्याप्रवणः

**स्वामी सच्चिदानन्दतीर्थः ॥**



निष्क्रियानवयवान्तरबाह्यं
दृश्यवस्तुषु कथं प्रकृतिः स्यात् ॥ १३ ॥

ब्रह्म धर्मि यदि हि श्रुतिसिद्धं
तद्विबाध्यमनुमानमशेषम् ।
अद्वयैकविषयाच्च ततोऽन्य-
न्नास्ति मानमिह धर्मिणि किंचित् ॥ १४ ॥

[स्वागता]

८. सर्वव्याख्यानाधिकरणम् ॥

## एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥

ब्रह्म यदि प्रकृतिर्जगतोऽस्य
श्रौतमृदादिनिदर्शनतः स्यात् ।
नैवमणुप्रमुखश्रुतिवाक्य-
व्रातनिदर्शनतः किमिति स्युः ॥ १५ ॥

प्राथमिकी किल याऽत्र प्रतिज्ञा
तामखिलोऽपि निदर्शनवर्गः ।
अङ्गतया न्यसनादनुरुन्द्धे
भक्तिरतोऽणु न किंचनसूक्तिः ॥ १६ ॥

(दोधकम्)

इति श्रीमदप्पय्यदीक्षितेन्द्रविरचिते चतुर्मतसारे नयमञ्जर्याख्ये
चतुर्थपरिच्छेदे प्रथमस्याध्यायस्य
चतुर्थः पादः ॥

## अथ द्वितीयोऽध्यायः ॥

### १. स्मृत्यधिकरणम् ॥

## स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्न, अन्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥

कपिलेन तत्त्वगणनैकतत्परा
रचिता स्मृतिर्निरवकाशताबलात् ।
निरुणद्धि कर्मविधिभिः कृतार्थया
श्रुतिमालयाऽवगमितं समन्वयम् ॥ १ ॥

नियतक्रमेति निरपेक्षतोद्धुरा
कपिलस्मृतेर्बलवती श्रुतिः स्फुटम् ।
स्मृतयोऽपि जाग्रति महद्भिर्निर्मिताः
श्रुतिमूलिकाः खलु ततो बलाधिकाः ॥ २ ॥

(मञ्जुभाषिणी)

### २. योगप्रत्युक्त्यधिकरणम् ॥

## एतेन योगः प्रत्युक्तः ॥ ३ ॥

ननु योगशासनमुपासनाङ्गस्थितौ
विदितं प्रमाणमिति तत्प्रधानाद्यपि ।

अवबोधयन्निरवकाशमित्यन्यतः
श्रुतिसंततीरपनयेन्नवद्ब्रह्मणः ॥ ३ ॥

विदधाति न क्वचन तत्प्रधानादिकं
तदनु ब्रवीत्यपि तु पूर्वपक्षागतम् ।
परतत्त्वचित्तविनिवेशयोग्याश्रये
किमपीह लक्ष्यमिति तन्न तद्वैशसम् ॥ ४ ॥

(कलभाषिणी)

३. विलक्षणत्वाधिकरणम् ॥

## न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥

अजडो जडस्य जगतः प्रकृतिः
कथमीश्वरो भवितुमर्हति ते ।
असरूपमेनमपहाय जग-
त्प्रकृतिः प्रधानमुररीक्रियताम् ॥ ५ ॥

न हि सर्वथा विकृतिकारणयोः
समरूपता क्वचिदपि प्रथिता ।
यदि किंचिदस्ति खलु सा विभुना
सदितीक्षितस्य जगतोऽस्य सता ॥ ६ ॥

(प्रमिताक्षरा)

### ४. शिष्टापरिग्रहाधिकरणम् ॥

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥

महदधिगतमल्पसंभवं
न खलु महत्क्वचिदल्पकारणम् ।
तदुचितमणवोऽस्य कारणं
न परमवैभवबृंहितः परः ॥ ७ ॥

इयमपि कुमतिप्रकल्पना
प्रभवति नैव विवर्तवादिषु ।
गिरिशिखरगतेषु शाखिषु
स्फुरति तृणाङ्कुरविभ्रमो यतः ॥ ८ ॥

(अपरवक्त्रम्)

### ५. भोक्त्रापत्त्यधिकरणम् ॥

## भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥ १३ ॥

ब्रह्माभिन्नं यदि खलु भोग्यै-
र्भोक्त्रा च स्यात्तदुभयभेदः ।
व्याहन्येत स्फुटपरिदृष्ट-
स्तन्नाद्वैतं श्रुतिगणबोध्यम् ॥ ९ ॥

भिन्नानां चेत्कुहचिदभेद-
स्तेषां भेदः कथमिव न स्यात् ।

अब्धौ भङ्गा न हि किमभिन्ना-

स्ते वाऽन्योन्यं किमिह न भिन्नाः ॥ १० ॥

(मत्ता)

६. आरम्भणाधिकरणम् ॥

## तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

अस्त्वेवमभेदो भेदश्च तदा हि

प्रत्यक्षविरोधः शक्यः परिहर्तुम् ।

न ह्यस्ति निकर्षः प्रामाण्यपदव्यां

प्रत्यक्षकखस्य श्रुत्यन्तसमूहात् ॥ ११ ॥

आरम्भणशब्दाद्यद्वैतपरोक्त्या

मुक्त्या च जडानां सत्यत्वनिरासात् ।

अक्षादिकमत्रामानं व्यवहारा-

तीतानवगाहीत्यद्वैतमखण्डम् ॥ १२ ॥

(मणिमाला)

७. इतरव्यपदेशाधिकरणम् ॥

## इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥

सर्वज्ञं खलु जीवं नो भिन्नं परिपश्येत् ।

संस्रष्टा तदनिष्टं संसारं कथमीशः ॥ १३ ॥

नावद्यैः प्रतिबिम्बे वक्त्रस्य क्षतिरस्ति ।
इत्येवं प्रतिवक्तुं तस्येयं किल लीला ॥ १४ ॥

(मदलेखा)

८. उपसंहारदर्शनाधिकरणम् ॥

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

द्वितीयरहितः परस्तव मतो
जगद्भवतु तत्करोतु च कथम् ।
बहुक्रमभवं विलक्षणमिदं
कुतः खलु भवेत्सहायरहितात् ॥ १५ ॥

स्वतन्त्रमपरं सहायमिह न
स्वशक्तिविभवास्तु जाग्रति परे ।
भवेत्स इयता जगज्जनयिता
पयोहिमनयादनन्यसहितः ॥ १६ ॥

(जलोद्धतगतिः)

९. कृत्स्नप्रसक्त्यधिकरणम् ॥

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

ब्रह्म हि कृत्स्नमेव यदि ते पय इव दधिता-
मेति विकारतां ध्रुवमिदं हि न भवति ततः ।

तामिदमेकदेशमुखतो यदि पुनरयते
 निष्कलशब्दकोपमिह को ह्यलमतिपतितुम् ॥ १७ ॥

क्षीरवदात्मनैव तदिदं न विपरिणमते
 कल्पितमायया‌ऽस्य खलु तद्बहुभवनमिदम् ।
तत्तु न कृत्स्नतो भवति तत्परिणतिवितति:
 किं तु मरीचिकोदकनयान्न सदसदुभयम् ॥ १८ ॥

(वंशपत्रपतितम्)

१०. सर्वोपेताधिकरणम् ॥

## सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

माया खल्वप्यवपुषि नास्मिन्युक्ता
 ब्रह्मण्यातो न जगदधिष्ठानं तत् ।
मायावित्वं दधति वपुष्मन्तो हि
 ब्रह्मानीदृक् प्रथमवपुःस्रष्टौ ते ॥ १९ ॥

ईशो मायी न च वपुरस्येत्युक्तिः
 श्रौती तर्कं प्रशिथिलमूलं कुर्यात् ।
नो चेद्वाह्यं सहकृतमन्येनालं
 दृष्टा मायिष्वपि किमियं नालंता ॥ २० ॥

(जलधरमाला)

११. प्रयोजनवत्त्वाधिकरणम् ॥

## न प्रयोजनवत्त्वात् ॥ ३२ ॥

यदि सृजति फलेप्सुताऽऽवशियकी
न भवति यदि सा विवेकक्षतिः ।
सृजति जगदवाप्तकामोऽपि चे-
दिह बत स विवेकिधुर्यः कथम् ॥ २१ ॥

सुखमनुभवतो हि लीलायितं
श्वसितमसुमतां वृथा चेष्टितम् ।
इति फलमनवेक्ष्य दृष्टार्थता
तदियमपि मता सृजिर्ब्रह्मणः ॥ २२ ॥

(मन्दाकिनी)

१२. वैषम्यनैर्घृण्याधिकरणम् ॥

## वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति ॥ ३४ ॥

जगद्धि निम्नमुन्नतं च पापपुण्यतत्फलैः
सृजत्यदो यदि प्रभुस्तदाऽस्य पक्षपातिता ।
न पूर्वपूर्वकर्मणेति वक्तुमत्र युज्यते
तदा ह्यनीश्वरत्वमस्य दूषणं प्रसज्यते ॥ २३ ॥

वाक्येन संबन्धद्वयासंभवादप्रामाण्यमाशङ्क्य तन्निरासार्थं स्तुत्यर्थत्वमापादितं तदनर्थकम् । कश्चित्त्वाह— यूपस्यादृष्टत्वात्तत्संबन्धो दधिहोमसंबन्धवन्न लोकतो लभ्यते । ततस्तस्य फलसंबन्धस्य च नैकस्माद्वाक्यात्सिद्धिरिति । तदसत् । यद्यपि यूपत्वमदृष्टम्, तेन तु निमित्तेन यस्मिन्काष्ठे यूपशब्दो वर्तते तस्य चौदुम्बरजातेश्च लौकिक एव संबन्धः। यदि चैवं न लभ्यते 'खादिरं वीर्यकामस्य यूपं कुर्यात्' इत्यत्रापि एकवाक्यता न स्यात् । अस्तु तत्र वाक्यभेद इति चेत्, वार्तमेतत्, एकवाक्यत्वावगमात् । यदि चात्रैकस्मिन्नाख्याते वाक्यभेदः, तथा सति 'औदुम्बरो यूपो भवति' 'ऊर्जं पशूनाप्नोति' इत्याख्यातद्वये सुतरां वाक्यभेदः प्रामाण्यं च संभवतीति दूरापेतमप्रामाण्यम् ॥

अथ 'खादिरो यूपो भवति' इत्येतद्वाक्यविहितयूपसंबन्धाश्रयणेन फलसंबन्धविधिः— यः खादिरो यूपः स वीर्यकामस्येति, तथा सति खादिरत्वं न क्रत्वर्थं स्यात्, उक्थ्यादिवद्व्यूढवच्च

त्विति । दधिवाक्ये दधिहोमयोः क्रियाकारकभावो लोकसिद्धोऽनुवाद्यः, फलसंबन्धमात्रं विधेयमिति न वाक्यभेदः । इह तु यूपोदुम्बरसंबन्धो न लौकिकः, यूपस्यालौकिकत्वात् । अतस्तस्यापि विधानं [1]नैकस्माद्वाक्यात्सिद्ध्यतीति शङ्कया पूर्वपक्षसंभव इत्यर्थः । छेदनादिजन्यसंस्कारविशिष्टदारुविशेषरूपो यूप इव देवतोद्देश्यकद्रव्यप्रक्षेपरूपो होमोऽपि विशिष्टरूपेणालौकिक एव । प्रक्षेपरूपविशेष्यांशे [2]तेषामस्येवाष्टाश्रत्वादिविशिष्टदारुविशेषरूपविशेष्यांशे लौकिकत्वं यूपस्याप्यविशिष्टम् । औदुम्बर इति विकारार्थतद्धितेनापि विशेष्यांश एव गृह्यते, तन्मात्रस्यैवोदुम्बरप्रकृतिकत्वादित्यभिप्रेत्याह[3]— तदसदिति । एवमनङ्गीकारे बाधकमाह— यदि चैवमिति । न लभ्यते ; नाभ्युपगम्यत इत्यर्थः । वार्तम् ; असारम् । 'कुशलासारयोर्वार्तम्' इति नैघण्टुकाः । ननु '[4]खादिरं वीर्यकामस्य' इत्यत्रालौकिक एव यूपखादिरसंबन्धः 'खादिरो यूपो भवति' इति विध्यन्तरप्राप्तोऽनूद्यते । इह यूपोदुम्बरसंबन्धप्रापकविध्यन्तराभावादनेनैव वाक्येन तस्यापि विधानं वाच्यमिति हि वाक्यभेददूषणमुपपद्यते इत्याशङ्क्ते— अथेति । एवं सति 'खादिरो यूपः' इति वाक्यस्य [5]गुणफलविधानाश्रयत्वसमर्पकत्वेनोपक्षीणतया खदिरस्य क्रतुसंबन्धबोधकवाक्यान्तराभावात् केवलपुरुषार्थतैव स्यात्, न क्रत्वर्थतेत्याह— खादिरत्वमिति ॥

ननु 'खादिरो यूपो भवति' इत्यतः खदिरस्य क्रत्वर्थताऽस्तु । गुणफलविधौ यूपखादिरसंबन्धस्याक्षेपाद्विध्यन्तरकल्पनाद्वा लाभो भविष्यति । अथ वा [6]क्रत्वर्थस्यैव सतः खदिरस्य स्वरूप-

1. नैतस्मात् 2. होमस्येवा० ; ०वाष्टाश्रत्वादि ; होमस्यैवाश्रयत्वादि 3. इत्यभिप्रेत्य परिहरति 4. खादिरं वीर्यकामस्य यूपं इत्यत्र 5. ०विधावाश्रयसमर्पकत्वेन ; ०विधानाश्रयसमर्पकेन 6. क्रत्वर्थे क्रत्वर्थस्यैव ; क्रत्वर्थविधिना क्रत्वर्थस्यैव

फलार्थमेव स्यात्; उभयार्थं चैतदिष्टं खादिरत्ववदुभयार्थतां दधिग्रहस्य वदतो निबन्धकार-

मात्रनिष्कर्षेण फलसंबन्धः क्रियते। अतो नोभयार्थत्वहानिरित्याशङ्क्यां दृष्टान्तोपन्यासमुखेन निराकरोति— [1]उक्थ्यादिवत्, व्यूढवच्चेति। ज्योतिष्टोमे चतस्रः संस्थाः, अग्निष्टोम उक्थ्यः षोडश्यतिरात्र इति। [2]संपूर्वस्तिष्ठतिः समाप्तिवाची। अग्निष्टोमस्तोत्रेण समाप्तिरग्निष्टोम[3]संस्थोच्यते। एवमुक्थ्यादिसंस्था अपि। तत्र अग्निष्टोमसंस्था नित्या क्रत्वर्था। उक्थ्यादिसंस्थास्तु गोदोहनादिवत्फलार्थाः, 'पशुकाम उक्थ्यं गृह्णीयात्, षोडशिना वीर्यकामः स्तुवीत, अतिरात्रेण प्रजाकामं याजयेत्' इति फलश्रवणात्। [4]न च प्रकरणाद्धेतेरुक्थ्यसंस्थादिस्वरूपप्रदर्शकवाक्यैः क्रत्वर्थताऽपि स्यादिति वाच्यम्; लोकतः प्रसिद्धानां तासां [5]स्वरूपावगमः सगुणफलविध्यपेक्षिततया तच्छेषत्वादिति तृतीयाध्याये निर्णीतम्। तथा द्विरूपो द्वादशाहः समूढो व्यूढश्च। समूढस्याद्यन्तेऽहनि [6]मध्यमदशरात्रगतदशममहश्चेत्येतानि ऐन्द्रवायवाग्राणि। इतरेषु नवस्वहःसु ऐन्द्रवायवाग्रं प्रथममहरथ शुक्राग्रमथाग्रयणाग्रमथैन्द्रवायवाग्रमथ शुक्राग्रमथाग्रयणाग्रमथैन्द्रवायवाग्रमथ शुक्राग्रमथाग्रयणाग्रम्, व्यूढस्याप्याद्यन्तेऽहनि [7]ऐन्द्रवायवाग्राणि इतरेषु [8]नवस्वहःसु ऐन्द्रवायवाग्रम्, आग्रयणाग्रे अथैन्द्रवायवाग्रमथ द्वे शुक्राग्रे, अथाग्रयणाग्रमथ द्वे ऐन्द्रवायवाग्रे। एवं ग्रहाग्रताविशेषेण भिन्नयो-[9]र्द्वादशाहस्य रूपयोः समूढो नैसर्गिको नित्यः, फलाश्रवणात्, व्यूढस्तु गोदोहनादिवत् अनित्यः पुरुषार्थः, 'यत्कामो व्यूढच्छन्दसा द्वादशाहेन यजेत सोऽस्मै कामः समृध्यते, [10]यं यं कामयते तं तमाप्नुयात्' इति फलश्रवणात्। न च [11]द्वादशाहप्रकरणमूलेन व्यूढोत्पत्तिवाक्ये तस्य नैसर्गिकरूपताऽपि स्यात् इति वाच्यम्; [12]लोकतोऽपि प्रसिद्धस्य स्वरूपसमर्पकतया गुणफलविधिशेषत्वादिति दशमाध्याये निर्णीतम्। तत्राप्याक्षेपाद्विध्यन्तरकल्पनात्[13] वाक्यं विना व्यूढस्य च प्रसिद्धिसंभवात् [14]इति क्रत्वर्थानामेव तेषां स्वरूपमात्रे[15] स्वरूपमात्रनिष्कर्षेण फलसंयोजनसंभवाच्च तेषामप्युभयार्थता स्यादिति तदधिकरणविरोधः प्रसज्येत। तस्मात् 'खादिरो यूपो भवति' इत्यनेन क्रत्वर्थता सिध्यत्विति पुरुषेच्छामात्रेणाक्षेपस्य विध्यन्तरस्य स्वरूपमात्रनिष्कर्षस्य वा गुणफलविध्यपेक्षापूरणार्थं कल्पनं न युक्तमिति भावः। ननु तर्हि 'खादिरो यूपो भवति' इति प्रत्यक्षविध्यन्तरस्य गुणफलविधिशेषतया [16]केवलपुरुषार्थतेव खादिरस्योक्थ्यादिवदस्त्वित्याशङ्क्याह— उभयार्थं चेति। दधिग्रहस्येति। 'यां वा अध्वर्युश्च यजमानश्च देवतामन्तरितस्तस्या आवृश्च्येते प्राजापत्यं दधिग्रहं गृह्णीयात्' इति ज्योतिष्टोमे श्रुतो दधिग्रहो [17]देवतान्तरायनिमित्तक इति पूर्वपक्षं कृत्वा 'ज्येष्ठो वा एष

1. उक्थ्यादिवद् व्यूहवच्चेति; उक्थ्यादिव्यूढवच्चेति 2. संपूर्वस्तिष्ठतेः समाप्तिवाचित्वात् 3. संस्थेत्युच्यते 4. अ. न च ज्योतिष्टोमप्रकरणाम्नातैरुक्थ्यासंस्थादि 5 स्वरूपावगम्यस्वरूपावगमस्य 6. मध्यदशरात्रमध्ये 7. ऐन्द्रवायवाग्रे 8. दशस्वहःसु ऐन्द्रवायवाग्रं प्रथममहरथ शुक्राग्रमथ द्वे आग्रयणाग्रे 9. द्वादशाहरूपयोः; द्वादशाहस्वरूपयोः 10. अ. 'यं कामं कामयते स तमाप्नुयात्' इति 11. द्वादशाहप्रकरणाम्नातेन व्यूढोत्पत्तिवाक्येन 12 लोकतः प्रसिद्धस्य व्यूढस्य 13. कल्पनाद्वा उक्थ्यादीनां व्यूढस्य च 14. इतीति नास्ति 15. स्वरूपमात्रे इति नास्ति 16. क. केवलपुरुषार्थतयैव; केवलपुरुषार्थतैव 17. क. देवताबाहुल्यप्रयुक्तविस्मरण...विशेषत्यागरूपदेवतान्तराय०

स्यापि। तस्माद्यूपाश्रितस्य खादिरत्वस्येवौदुम्बरत्वस्य फलार्थविधिसंभवान्नाप्रामाण्यशङ्केत्यास्तां तावत्। तस्मादौदुम्बरता यूपोद्देशेन विधीयते। तत्स्तुतिरियम्— 'ऊर्जोऽवरुद्ध्यै' इति सिद्धम्॥

---

ग्रहाणाम्' इति नित्यवद्दधिग्रहस्य ज्यैष्ठ्यश्रवणात् प्रकरणाम्नानात् [1]निमित्तार्थकसप्तम्याद्यश्रवणाच्च नित्य एव; अन्तरायश्रवणं तु अर्थवादमात्रमिति चतुर्थे दधिग्रहस्य नित्यता स्थापिता। श्रुतौ नित्यदधिग्रहाम्नानानन्तरं 'दधिग्रहं गृह्णीयात्पशुकामस्य' इति फलसंयोगस्यापि श्रवणात् सकाम्यापीति 'नित्यकामो यदैन्द्रवायवः' इति संकर्षाधिकरणे तस्य काम्यताऽपि स्थापिता। एवमधिकरणद्वयसिद्धं दधिग्रहस्योभयार्थत्वं [2]निबन्धनदीपिकायामुपन्यस्यता प्राभाकरेणोभयार्थत्वे खादिरो दृष्टान्तीकृत इति तस्य केवलपुरुषार्थत्वं [3]नेष्टमित्यर्थः। प्रसाधितं दृष्टान्तं प्रकृतेन संगमयन् परमतदूषणमुपसंहरति— तस्मादिति। स्वमते अधिकरणार्थमुपसंहरति— तस्मादौदुम्बरतेति॥

---

हेत्वधिकरणम्॥ ३॥

**हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम्॥ २६॥ स्तुतिस्तु शब्दपूर्वत्वात्, अचोदना तस्य॥ २७॥ अर्थे स्तुतिरन्याय्येति चेत्॥ २८॥ अर्थस्तु विधिशेषत्वाद्यथा लोके॥ २९॥ यदि च हेतुरवतिष्ठेत निर्देशात्, सामान्यादिति चेदव्यवस्था विधीनां स्यात्॥ ३०॥**

---

## ॥ जैमिनीयन्यायमाला ॥

तेन ह्यन्नमिति प्रोक्तो वादो हेतुरुत स्तुतिः।
हिना श्रुता हेतुताऽतः शूर्पमन्यच्च साधनम्॥ ९॥

शूर्पसाधनता श्रौती नाश्रौतैः सा विकल्प्यते।
अतो निरर्थको हेतुः स्तुतिस्तस्मात्प्रवर्तिका॥ १०॥

---

1. म. निमित्तसप्तम्याद्यश्रवणाच्च 2. ०टीकायां 3. नेष्टव्यमित्यर्थः

एवमानर्थक्यप्रतियोगिनो विधिप्रतियोगिनश्चार्थवादा विचारिताः। इदानीं हेतुप्रतियोगिनो विचार्यन्ते। एवं हि श्रूयते— 'शूर्पेण जुहोति तेन ह्यन्नं क्रियते' इति। तत्र संशयः— किं शूर्पेण होमे कर्तव्येऽन्नकरणता हेतुः, उतार्थवाद इति। तत्र हिशब्दश्रुत्या हेतुत्वं

हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥

वृत्तसंकीर्तनपूर्वकमधिकरणार्थं दर्शयन् संगतिं [1]सूचयति— एवमिति। आनर्थक्यं प्रतियोगिविरोधिसिद्धान्तन्यायनिवर्त्यम् एषामिति तथोक्ताः। एवं विधित्वं हेतुत्वं वा विरोध्येषामिति[2] विधिप्रतियोगिनो हेतुप्रतियोगिनश्च। इह केचिदानर्थक्यप्रतियोगिनः, अन्ये विधिप्रतियोगिनः, अपरे हेतुप्रतियोगिन इत्यर्थवादानां [3]त्रैराश्यं न विवक्षितम्। पूर्वतनाधिकरणे सर्वार्थवादसाधारण्येनानर्थक्यशङ्कायाः स्तुत्यर्थोपपादनेन निराकरणात्। तेषां मध्य एव केषुचिद्विधिसंभवेन स्तुत्यर्थत्वाक्षेपस्य पूर्वाधिकरणे निराकरणादिदानीं तेषां मध्येऽपि[4] केषुचिद्धेतुविधिः संभवतीति पूर्वपक्षप्रवृत्तेः 'ऊर्जोऽवरुद्ध्यै' इत्यत्र फलवत् 'तेन ह्यन्नं क्रियते' इत्यत्र हेतुत्वमपि विधेयमिति [5]एवं हि पूर्वपक्षीक्रियते— उदुम्बरतायां [6]पशुफलसंबन्धस्येवान्नकरणत्वे [7]होमसाधकताहेतुत्वस्यान्यतोऽप्राप्तस्यैव बोध्यत्वेनाज्ञातज्ञापनाविशेषात्। किं त्वानर्थक्य[8]प्रतियोगित्वादिमहासामान्यावान्तरसामान्यतदवान्तरसामान्योपाधिभेदमात्रेण भेदो विवक्षितः। एवं च पूर्वाधिकरणस्येवास्याप्याक्षेपिकी समनन्तराधिकरणसंगतिरिति इदानीमित्यनेन सूचितम्। न च पूर्वाधिकरणे फलविधिसरूपार्थवादा विषयाः, इह [9]तु हेतुविधिसरूपा इति [10]भेदान्नाक्षेपलाभ इति वाच्यम्; [11]पूर्वं विधिवन्निगदमात्रस्य विषयत्वात्। अत एव 'यो विदग्धः स नैर्ऋतः' इति दर्शपूर्णमासप्रकरणाम्नाते गुणविधिसरूपार्थवादे विदग्धं पुरोडाशमुद्दिश्य निर्ऋतिदेवतारूपगुणविधिश्चेत् [12]प्राकरणिकाग्न्यादिदेवताया [13]अपकर्षोपनयः स्यात्। नैर्ऋतं पुरोडाशमुद्दिश्य विदग्धत्वगुणविधिश्चेत् यत्रेष्ट्यन्तरे निर्ऋतिदेवतं हविरस्ति तत्रास्य वाक्यस्याप्यपकर्षः[14] स्यात्, तयोरनौचित्यादर्थवादतैव युक्तेति पूर्वाधिकरण[15]गुणसूत्रे दर्शितम्। ग्रन्थकृता [16]तु विस्तरभीरुणा फलविधिसरूपार्थवादमात्रमुदाहृत्येदमधिकरणशरीरं[17] दर्शितम्। विषयवाक्यं पठित्वा संशयं दर्शयति— एवं हीति। पूर्वपक्षं [18]गृह्णाति— तत्रेति ॥

ननु श्रुतिलक्षणयोः श्रुतेर्ज्यायस्त्वेऽपि[19] वैदिकार्थस्य [20]हेत्वनपेक्षत्वादगत्या स्तुतिलक्षणैवा-

1 म. दर्शयति 2. विरोधीत्येषामिति 3. त्रैविध्यं 4. अपीति नास्ति 5. अ. एवं 6. पशुफलसंबन्धस्यैव 7. ०साधन० 8. अ. प्रतियोगित्व 9. तु इति नास्ति 10. विषयभेदात् 11. पूर्वत्र 12. प्राकरणिकाग्न्यादिदेवतायाः 13. क. ०अपकर्षापनयः 14. अपिर्नास्ति 15. गुणसूत्रेण 16. तु इति नास्ति 17. ०मधिकरणं 18. अ. संगृह्णाति 19. बलीयस्त्वेऽपि 20 हेत्वनपेक्षितत्वात्

गम्यते ; लक्षणया प्राशस्त्यम्। अनर्थकप्रायश्चार्थवादः। हेतुस्त्वर्थवान्। कः पुनरर्थो हेतोः? येन येनान्नं क्रियते शूर्पादन्येनापि दर्वीपिठरादिना तेन तेनापि होमसिद्धिः हेतोः प्रयोजनम्। कथमप्रसिद्धाया व्याप्तौ हेतुत्वव्यपदेशः? अत एव हेतुव्यपदेशाद्व्याप्तिमन्तरेणा-

---

श्रयणीयेत्याशङ्क्याह— अनर्थकेति। विधिबलादपि स्तुतिकल्पनासंभवेनानर्थकप्रायं स्तावकत्व-कल्पनमित्यर्थः। सार्थवादेष्वर्थवादेनैव प्ररोचनमित्यध्ययनविध्यापादितनियमवशेन स्तावकत्वे कथं-चिदर्थवत्त्वं घटते। हेतुपरत्वे तु न कथंचिदपि, वैदिकार्थस्य हेतुनिरपेक्षत्वादित्याशङ्क्याह— हेतुस्त्विति। प्रश्नपूर्वकं हेतुबलेन शूर्पादन्यदपि [1]यद्यदन्नकरणं तस्य सर्वस्यापि [2]होमसाधकत्वम्। अन्नकरणत्वस्य हेतुकरणसामर्थ्यादाक्षिप्तेन हेतुवचनेन [3]लभ्यमधिकार्थमाह— कः पुनरित्यादिना। एवं च यच्छूर्पस्य होमसाधनत्वं श्रुतं तस्य हेत्वनपेक्षत्वेऽप्यधिकार्थलाभार्थत्वेन हेतुनिर्देशो युक्तः। अधिकार्थ[4]लाभार्थहेतोरातिथ्यायां 'चतुर्गृहीतान्याज्यानि [5]भवन्ति' इति विधानम्। तत्र हेत्वनपेक्षा-यामर्थान्तरलाभार्थः[6]। न ह्यत्र अनूयाजा इज्यन्त इति हेतुः। तेन हि यत्र यत्रानूयाजानामभावः तत्र तत्राष्टगृहीताभाव इति व्याप्तिराक्षिप्यत [7]इति। तेन च यदुपभृति प्रयाजानूयाजेभ्यस्तदित्यवि-शेषेणौपभृताज्यस्य प्रयाजानूयाजोभयार्थत्वे श्रवणस्यौपभृताष्टगृहीतमध्ये प्रथमचतुर्गृहीतं[8] अनूया-जार्थमिति विशेषविषयता सिध्यति। एवं च सति 'यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्' इति वचनानु-सारेण त्रिषु प्रयाजेषु जौहवाज्येन कृतेष्वतिहाय्येतो बर्हिः प्रतिसमानयते जुह्वामौपभृतमिति बर्हिर्ना-मकचतुर्थप्रयाजोपक्रमे चतुर्थपञ्चमप्रयाजार्थं जुह्वामौपभृताज्यस्य समानयनं श्रुतम्। तत्रार्धं[9] समाने-तव्यमिति नियमः सिध्यति। अन्यथा न ह्यत्रेति हेतुनिर्देशाभावे उपभृत्यष्टगृहीतमध्ये आद्यं [10]चतु-र्गृहीतं प्रयाजार्थमुपरितनं चतुर्गृहीतमनूयाजार्थमिति [11]विश्लेषनियामकाभावादौपभृतमष्टगृहीतम्, उपरितनं प्रयाजद्वयार्थम् अनूयाजत्रयार्थं च भवेदिति प्रयाजद्वयार्थमर्धसमानयनं न सिध्येत्, अनूयाजत्रयार्थमर्धाधिकस्याविशेषणीयत्वप्रसङ्गात्। एवं यथा तत्रार्थविशेषलाभार्थो हेतुनिर्देशः, एव-मिहापि स्यादिति भावः॥

ननु शूर्पगतमेवान्नकरणत्वं हेतुश्चेन्न ततो [12]द्रव्यादीनां होमसाधनत्वं सिध्यतीत्यधिकार्थं लि-लम्भयिषतां [13]न करणत्वं हेतुरिति [14]द्रष्टव्यम्। तन्नोपपद्यते, तथा व्याप्तेरसंप्रतिपत्तेरित्याशङ्क्ते— कथमिति। [15]हेतुनिर्देशादन्यथानुपपत्त्यैव व्याप्तिवचनं कल्प्यते; श्रुतोपपत्त्यर्थमश्रुतकल्पनौचित्या-दित्याह— अत एवेति। ननु शूर्पस्य होमसाधनत्वं शूर्पवचनेनापि प्रतिपाद्यते, कल्पितवचनेनापि[16]

---

1. यदन्नकरणं 2. होमसाधनत्वम् 3. ०धिकरणर्थमाह 4. लाभार्थे 5. क. भवन्ति। न ह्यत्र अनूयाजा इज्यन्ते इत्यत्र अर्थवत्त्वसंप्रतिपत्तेः 'चतुर्जुह्वां गृह्णात्यष्टावुपभृतिचतुर्ध्रुवायां इति श्रुतदार्शपूर्णमासिकौपभृताष्ट-गृहीतव्यावृत्त्यर्थमातिथ्येष्टौ चतुर्गृहीतान्याज्यानि भवन्तीति विधानम् 6. लाभार्थे न ह्यत्र 7. क. इतीति नास्ति 8. प्रयाजार्थं द्वितीयचतुर्गृहीतं इत्यधिकः पाठः 9. तत्रार्धं 10. क. चतुर्गृहीतं 11. विशेषे नियामका-भावात् 12. दर्व्यादीनां 13. करणत्वमात्रं 14. एष्टव्यं 15. हेतुनिर्देशान्यथानुपपत्त्यैव 16. व्याप्तिवचनेनापि

नुपपद्यमानात् व्याप्तिवचनं कल्प्यते, येन येनान्नं क्रियते तेन तेन होतव्यमिति। तेन वचनेन सर्वान्नकरणविधायिना शूर्पस्यापि होमसाधनत्वसिद्धेः 'शूर्पेण जुहोति' इत्यवयुत्यानुवादः। तेनेदृशमिदं वाक्यं श्रुतानुमितैकदेशनिष्पन्नं शूर्पस्य होमसाधनत्वमन्नकरणाद्धेतोः। अतः शूर्पमन्यद्वा यदन्नकरणं तेन होतव्यमिति पूर्वः पक्षः। सिद्धान्तस्तु— शूर्पस्य तृतीयाश्रुत्या करणत्वं गम्यते; न तदानुमानिकैर्दर्वीपिठरादिभिर्विकल्पितुमर्हति। न च वेदेनोच्यमानं शूर्पस्य होमसाधनत्वं हेतुमपेक्षते, वेदस्यैव तत्र प्रमाणत्वात्; अर्थवादस्त्वपेक्षितः प्ररोचनार्थत्वेन। तस्मादर्थवादत्वम् ॥

---

लभ्यते, एकस्यार्थे कथं वचनद्वयमित्याशङ्क्याह— **तेनेति**। कल्पितवचनस्याविधायकत्वे [1]द्रव्यादीनां होमसाधनत्वासिद्ध्या हेतोरर्थवत्त्वाभावप्रसङ्गादावश्यकेन तेनैव शूर्पस्यापि [2]होमसाधनत्वे सिद्धे शूर्पवाक्यमवयुत्यानुवाद इत्यर्थः। श्रुतानुमितैकदेशनिष्पन्नमित्युक्तम्, तत्र श्रुतैकदेशमनुमितैकदेशं च विभज्य दर्शयति— **शूर्पस्येति**। हेतोरित्यन्तं श्रुतैकदेशार्थस्य प्रदर्शकम्; [3]तदनन्तरमनुमितैकदेशार्थस्येति विभागः। **सिद्धान्तास्त्विति**। ननु [4]विषमशिष्टविकल्पापत्तिदूषणमयुक्तम्; [5]शूर्पं प्रत्यक्षादिना द्रव्यादिकमानुमानिकविधिना च विधीयते चेदेवं हि विषमशिष्टत्वं भवेत्। न चैवं पूर्वपक्षी मन्यते। सर्वेषामेकेनैवानुमानिकवचनेन विधानम्; शूर्पवाक्यमनुवाद इति तेनोक्तत्वात्। अत एव न विकल्पापत्तिरपि। अन्यकरणत्वेनैकेनैव रूपेण सर्वेषां [6]विधानात्। व्रीहियववद्रूपभेदेन विधाने हि विकल्पः। अन्यथा शूर्पत्वाकारेणापि[7] विधाने विकल्पः स्यादिति शङ्कां परिहरति— **शूर्पस्येति**। [8]एकेन विधिना एकेनैव रूपेण सर्वेषामपि विधानमिति पूर्वपक्षिणोक्तम्; [9]दुरुक्तं तु तत्; शूर्पवाक्येन प्रापितं शूर्पेण होमस्य कर्तव्यत्वं साध्यमवलम्ब्य खलु हेतुवचनं प्रवृत्तम्। साध्याभावे हेतुवचनानर्थक्यात् कथं पश्चाद्धेतुवचनेन कल्पितं व्याप्तिवचनं तदनुवादत्वापादकं स्यात्। व्याप्तिवचनमेव शूर्पांशेऽनुवादकमिति युक्तम्। यथा 'चतुर्गृहीतान्याज्यानि भवन्ति' इति वाक्यं ध्रौवजौहवांशे 'चतुर्जुह्वां गृह्णाति चतुर्ध्रुवायाम्' इति प्रकृतादाम्नानाच्चोदकतस्तयोराज्यग्रहणं प्राप्यमाणं चतुःसंख्याविशिष्टमेव प्राप्यत इति तदंशेऽनुवादकमिति प्राप्तौपभृताष्टगृहीतव्यावर्तनमात्रफलम्; न तु प्रथमप्राप्तचोदको ध्रौवजौहवाज्यग्रहणचतुःसंख्यानुवादकः। एवमिहापि युक्तम्। तस्माच्छूर्पस्य प्रत्यक्षवचनेन शूर्पत्वाकारेण होमविधानं द्रव्यादीनामानुमानिकवचनेनान्नकरणत्वाकारेणेति विषमशिष्टविकल्पदूषणं व्याप्तिवचनकल्पनागौरवं शूर्पगतहोमसाधनत्वहेतुसमर्पकश्चेदिदं दूषणमिति संभावितपक्षान्तरदूषणत्वेन नेतव्यम् ॥

ननु व्याप्तिवचनकल्पकत्वे वैदिकार्थहेतुसमर्पकत्वे वा भवत्वेवं दूषणम्। न तथाऽभ्युपेयते। किं तु शूर्पस्य होमसाधनत्वे श्रुतं शूर्पत्वं न प्रयोजकम्; अपि त्वन्नकरणत्वमित्येवं शूर्पे होमसाधन-

---

1. दव्यादीनां 2. होमसाधनत्वसिद्धेः 3. तदनन्तरवाक्यमनुमितैकदेशार्थस्येति 4. क. विषमविशिष्ट० 5. शूर्पं प्रत्यक्षविधिना 6. अविधानात् 7. अपीति नास्ति 8. सत्यं एकेन कल्पितविधिना एकेन रूपेण सर्वेषां 9. अनिरुक्तं

एवं चाप्रसिद्धव्याप्तिवचनकल्पनाक्लेशो न भविष्यति। क्रियत इति चावर्तमाने वर्तमाननिर्देशः प्ररोचनार्थत्वे युक्तो भवति। न हि भूते भाविनि वा तादृशी प्रीतिर्यादृशी वर्तमाने। तेन रुच्यर्थत्वेन लक्षणया वर्तमाननिर्देशः युक्तः। विध्यर्थत्वे तु निष्प्रमाणकं लक्षणाऽऽश्रयणम्। न च श्रुतेन वर्तमानान्नक्रियेण मुख्यान्नकरणेन च शक्यते होमः कर्तुम्। तस्मादर्थवादत्वम्॥

---

त्वप्रयोजकहेतुसमर्पक इति। एवं च हिशब्दोक्तेन हेतुना शूर्पशब्दस्यान्नकरणसामान्ये दर्व्यादि-साधारण्यजहल्लक्षणा लभ्यते। 'काकेभ्यो दधि रक्ष्यताम्; ते हि दध्युपघातकाः' इति वाक्ये काकशब्दस्येव गृहमृगादिसाधारणीत्यस्वरसादाह— क्रियत इति। अनुपजातविरोधिशूर्पस्य जघन्यहेतुश्रुत्यनुसारेण लक्षणाकल्पना तावन्न युक्ता। न चानन्यगतिकत्वेन हेतुश्रुतेः प्राबल्यम्। यस्मादन्नकरणत्वेन शूर्पं प्रशस्तं तस्मात्तेन होतव्यमिति शूर्पगतप्राशस्त्यहेतुसमर्पकतया तत्साफल्यात्। न च प्राशस्त्यलक्षणो दोषः, स्तुतेरवश्यापेक्षितव्यत्वात्। लक्षणयाऽपि समभिव्याहृतपदैस्तदुपस्थिति-संभवे विधावेव स्तुतिशक्तिकल्पनाभ्युपगमस्य अयुक्तत्वात्। अन्नकरणत्वोपन्यासस्याकाङ्क्षितस्तुतिद्वारत्वं विहाय अनाकाङ्क्षितशूर्पपदलक्षणार्थत्वकल्पनस्य व्याप्तिवचनलाभार्थत्वकल्पनस्य चायुक्तत्वाच्चेत्यनुक्तसमुच्चयार्थेन चकारेण सूच्यते। क्रियत इत्यादिना च स्तुत्यर्थत्वे उपपत्त्यन्तरमुच्यते। क्रियत इति तावदवर्तमाने वर्तमाननिर्देशः। [1]वर्तमानाक्रियेण [2]शूर्पेण होमानुष्ठानायोगात्स्तुत्यर्थतायामवकल्पत इत्यर्थः। कुत इत्याकाङ्क्षायामाह— न हीति। लोकसिद्धमेतत्[3]— यत् स्तुतिद्वारगुणस्य वर्तमानतया निर्देशे प्रीत्यतिशयो भवति[4]। इयं गौः पूर्वं बहुक्षीराऽऽसीत्; तथैवेतः परमपि प्रसवानन्तरं[5] भविष्यति इत्युक्तौ वा[6] न तादृशी प्रीतिः, यादृश्यधुना बहुक्षीरेत्युक्ताविति, तथैवात्रापीति भावः। लक्षणयेति। न च 'वर्तमानसामीप्ये वर्तमानवद्वा' इत्यनुशासनादवर्तमानेऽपि मुख्यवृत्तिर्घटत इति वाच्यम्। [7]तथा सति येन शूर्पेणाव्यवहितकालेऽन्नं कृतं करिष्यते [8]वा तेनैव होतव्यमिति नियमांशस्याप्यप्राप्तस्य विधेयतापत्त्या वाक्यभेदप्रसङ्गात्। [9]न च [10]तस्यान्नक्रियाशक्ति-[11]वर्तमानत्वविषयता लडाख्यातस्यास्तु। तथा च [12]तस्य लक्षणा नोपपद्यते इति वाच्यम्; तथाऽपि क्रियाविषयधातोस्तच्छक्तौ लक्षणापत्तेरिति भावः। हेतुविधिपक्षेऽपि तर्हि तथैव लक्षणाऽस्त्वित्याशङ्क्य 'न विधौ परः शब्दार्थः' इति न्यायान्नैवमित्याह— विध्यर्थत्वे त्विति। किं च विधिपक्षे मुख्यमेवान्नकरणं ग्राह्यम्; न च तथाभूतं शूर्पमतिव्यवहितत्वात्। अतो यथाकथंचिदन्नकरणत्वव्यपदेशो वर्तमानान्नक्रियत्वव्यपदेश इव स्तुतिपक्ष एव घटत इत्याह— न च श्रुतेनेति॥

---

1. क. वर्तमानान्नक्रियेण 2. अ. शूर्पेण इति नास्ति। 3 लोकसिद्धमेव तत् 4. इति इत्यधिकम् 5. प्रसवानन्तरं इत्येतदुत्तरं बहुक्षीरेत्यधिकम् 6. बहुक्षीरायाः धेनोर्वत्सेयं तथैव प्रथमप्रसवमारभ्य बहुक्षीरा भविष्यतीत्युक्तौ वा इत्यधिकः पाठः 7. तथाऽपि 8. च 9. न हि 10. तस्येति नास्ति 11. शक्तेः 12. तस्येति नास्ति

मन्त्राधिकरणम् ॥ ४ ॥

तदर्थशास्त्रात् ॥ ३१ ॥ वाक्यनियमात् ॥ ३२ ॥ बुद्धशास्त्रात् ॥ ३३ ॥ अविद्यमानवचनात् ॥ ३४ ॥ अचेतनेऽर्थबन्धनात् ॥ ३५ ॥ अर्थविप्रतिषेधात् ॥ ३६ ॥ स्वाध्यायवद्वचनात् ॥ ३७ ॥ अविज्ञेयात् ॥ ३८ ॥ अनित्यसंयोगान्मन्त्रानर्थक्यम् ॥ ३९ ॥ अविशिष्टस्तु वाक्यार्थः ॥ ४० ॥ गुणार्थेन पुनः श्रुतिः ॥ ४१ ॥ परिसंख्या ॥ ४२ ॥ अर्थवादो वा ॥ ४३ ॥ अविरुद्धं परम् ॥ ४४ ॥ संप्रैषे कर्मगर्हाऽनुपलम्भः संस्कारत्वात् ॥ ४५ ॥ अभिधानेऽर्थवादः ॥ ४६ ॥ गुणादप्रतिषेधः स्यात् ॥ ४७ ॥ विद्यावचनमसंयोगात् ॥ ४८ ॥ सतः परमविज्ञानम् ॥ ४९ ॥ उक्तश्चानित्यसंयोगः ॥ ५० ॥ लिङ्गोपदेशश्च तदर्थत्वात् ॥ ५१ ॥ ऊहः ॥ ५२ ॥ विधिशब्दाश्च ॥ ५३ ॥

---

॥ जैमिनीयन्यायमाला ॥

मन्त्रा उरु प्रथस्वेति किमदृष्टैकहेतवः ।
यागेषूत पुरोडाशप्रथनादेश्च भासकाः ॥ ११ ॥

ब्राह्मणेनापि तज्ज्ञानान्मन्त्राः पुण्यैकहेतवः ।
न तज्ज्ञानस्य दृष्टत्वाद्दृष्टं वरमदृष्टतः ॥ १२ ॥

मन्त्रब्राह्मणयोर्यद्वा कलहो विनियोजने ।
न मन्त्रलिङ्गसिद्धार्थमनुवक्तीतरद्यतः ॥ १३ ॥

---

गतोऽर्थवादप्रसङ्गः । मन्त्रेष्विदानीं चिन्ता । तेषामपि स्वाद्येऽधिकरणे आनर्थ-

---

तदर्थशास्त्रात् ॥

वृत्तानुवादपूर्वकमधिकरणविषयं दर्शयन् संगतिं सूचयति— गत इति । अर्थवादाधिकरणे सामान्यतः सर्वेषामर्थवादानां स्तुत्यर्थत्वं प्रसाधितम् । तद्विधिवन्निगदहेतुवन्निगदयोरव्यापकमिति शङ्कानिरासेन समनन्तराधिकरणयोः प्रतिष्ठापितमिति विध्युद्देशसमभिव्याहृतार्थवादविषया

तदिति । तत् तस्मात्कारणात् । अत्रास्मिन् सदसि । दैवात् विधिवशात् । विकारं चित्तविकारम् । गमितः प्राप्तः सन् । 'तस्मात्स्वार्थे णिजुत्पाद्यो मितां ह्रस्वो यथा भवेत्' इति वचनात् गमिः स्वार्थे ण्यन्तः । सर्वे धातवः स्वार्थे ण्यन्ता इति केचित् । 'रामो राज्यमकारयत्' इति प्रयोगश्च । भूमौ भुवि भूयः पुनरपि मर्त्यभूयं मनुष्यत्वम् । 'भुवो भावे' इति क्यप् । भज प्राप्नुहि । इयं च गङ्गा दिवः स्वर्गाद् भुवमवतीर्णा सती अवतारं गता सती । द्वितीयं दुग्धाब्धिमिव स्थितं क्षीरसागरमिव स्थितं त्वां रमयिष्यति ॥ ३९ ॥

**क्रियाभिरस्याः श्रुतिगर्हिताभि-**
**र्यदा भवान्यास्यति वैमनस्यम् ।**
**हित्वा तदा ह्रीरिव कामिनं त्वां**
**निजं पदं प्राप्स्यति निम्नगेयम् ॥ ४० ॥**

क्रियाभिरिति । अस्याः श्रुतिगर्हिताभिर्वेदनिन्दिताभिः । 'वेदे श्रवसि च श्रुतिः' इत्यमरः । क्रियाभिर्व्यापारैर्भवान् यदा यस्मिन् काले वैमनस्यं विमुखत्वं यास्यति; त्वं गमिष्यसीत्यर्थः । 'शेषे प्रथमः' इति प्रथमपुरुषः । शेषे चायं भवच्छब्दः, युष्मदस्मच्छब्दव्यतिरेकात् । तदा तस्मिन् काले इयं निम्नगा गङ्गा त्वां भवन्तं ह्रीर्लज्जा कामिनं कामुकमिव । 'विलासी कामुकः कामी स्त्रीपरो रतिलम्पटः' इति शब्दार्णवे । हित्वा त्यक्त्वा । 'जहातेश्च' इति हिरादेशः । निजं स्वकीयं पदं स्थानम् । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । प्राप्स्यति यास्यति, शापान्मुक्ता भविष्यतीत्यर्थः ॥ ४० ॥

**तथेति पद्मासनशासनं त-**
**न्निधाय मौलौ भुवमापतन्त्याः ।**
**समानदुःखानिह दर्शयन्वो**
**मन्ये विधिर्मे विहितोपकारः ॥ ४१ ॥**

तथेति । हे वसवः । तथेति बाढमिति तत् पूर्वोक्तं पद्मासनशासनं ब्रह्माज्ञां मौलौ शिरसि निधाय भुवमापतन्त्याः आगच्छन्त्याः मे मम समानदुःखान् तुल्यशोकान्वो युष्मान्दर्शयन् विधिः विरिञ्चिः मे विहितोपकार इति । 'न दुःखं पञ्चभिः सह' इति न्यायादिति भावः । मन्ये, वाक्यार्थः कर्म ॥ ४१ ॥

यूयं ममाविर्भवत क्रमेण
गर्भे नलिन्या इव पद्मकोशाः ।
त्यक्ष्यामि वः सप्त पयःसु जातान्
पुत्रो भुवि स्थास्यति मे यवीयान् ॥ ४२ ॥

यूयमिति । हे वसवः । यूयं मम गर्भे कुक्षौ 'कुक्षिभ्रूणार्भका गर्भाः' इत्यमरः । नलिन्याः पद्मिन्या गर्भे पद्मकोशाः पद्मकोरका इव क्रमेण कालक्रमेणाविर्भवत जायध्वमित्यर्थः । अथ जातान् प्रसूतान् सप्त वो युष्मान् पयःसु वारिषु त्यक्ष्यामि मोक्ष्यामि । यवीयान् यविष्ठः अन्तिम इत्यर्थः । 'स्थूलदूरयुव' इत्यादिना यणादिपरलोपः पूर्वस्य च गुणः । मे पुत्रो भुवि स्थास्यति स्थितिं प्राप्स्यति ॥ ४२ ॥

इति श्रुतार्था वसवः प्रयाता-
स्तानेव मन्यस्व मयि प्रसूतान् ।
तेषां तु मोक्षाय दयां दधत्या
विगर्हितं कर्म कृतं मयेदम् ॥ ४३ ॥

इतीति । हे राजन् । इत्यनेन प्रकारेण श्रुतार्था श्रुतप्रयोजनाः 'अर्थोऽभिधेयरैवस्तु-प्रयोजननिवृत्तिषु' इत्यमरः । वसवः प्रयाता गताः । मयि प्रसूतानुत्पन्नान् तानेव वसूनेव मन्यस्व जानीहि । 'मन ज्ञाने' इत्यस्य दैवादिकस्य धातोर्लोटि रूपम् । किं तु तेषां वसूनां मोक्षाय मुक्तये दयां दधत्या मया विगर्हितं निन्दितमिदं पुत्रहननरूपं कर्म कृतं न त्वन्यदिति भावः ॥ ४३ ॥

महाभिषक् त्वं भवता चिराय
भोगानशेषानिह निर्विशन्नीभ्यः ।
व्ययोजयन्मां समयावसान-
व्याजेन शापावधिरेष पापः ॥ ४४ ॥

महाभिषगिति । हे राजन् । इह त्वत्समीपेऽशेषान् भोगान् सुखानि । 'भोगः सुखे स्त्र्या-

दिभूतौ' इत्यमरः। निर्विशन्तीमनुभवन्तीम्। 'आच्छीनद्योः' इति विकल्पात् नुम्। मां पापो दुष्टः। 'अथ त्रिषु द्रव्ये पापं पुण्यं सुन्दादि च' इत्यभिधानात् पापशब्दः पुंलिङ्गः। एष शापावधिः शापान्तः समयावसानव्याजेन संविद्रुपसंकेतत्वेन 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः। भवता त्वया व्ययोजयत् वियोजितवान्॥ ४४॥

**अयं शिशुः स्कन्द इव द्वितीयो**
**नीतो मया संप्रति वीतबाल्यः ।**
**उपेष्यति त्वामिति सा वदन्ती**
**साकं कुमारेण तिरोबभूव ॥ ४५ ॥**

अयमिति। हे राजन्। अयं शिशुर्बालः द्वितियः स्कन्दः पार्वतीनन्दन इव संप्रतीदानीं मया नीतः सन्। स्कन्दोऽपि गङ्गया बाल्ये पोषित इत्यागमः। अत एव 'गाङ्गेयो गुहभीष्मयोः' इत्यभिधानं च। त्वामुपेष्यति इत्युक्तप्रकारेण वदन्ती सा गङ्गा कुमारेण साकं शिशुना समम्। 'साकं सत्रा समं सह' इत्यमरः। तिरोबभूवान्तर्दधे॥ ४५॥

**तस्या वियोगव्यथयाऽर्पितेन**
**परिष्कृताङ्गस्य भृशं कृशिम्ना ।**
**चापेन गोपायितुरस्य पृथ्वी-**
**मष्टादशाष्टौ च समा व्यतीयुः ॥ ४६ ॥**

तस्या इति। तस्या गङ्गाया वियोगव्यथया विरहदुःखेनार्पितेन विरहजनितेनेत्यर्थः। कृशिम्ना कृशत्वेन। पृथ्वादिपाठादिमनिच्। 'र ऋतो हलादेः' इति ऋकारस्य रेफः। परिष्कृताङ्गस्य अलंकृतशरीरस्यात्यन्तकृशस्येत्यर्थः। परिष्कृतेत्यत्र 'संपरिभ्यां करोतौ भूषणे' 'सुट्कात्पूर्वः' इति सुट्। 'परिनिविभ्यः—' इति षत्वम्। चापेन धनुषा पृथ्वीं भुवम्। 'न लोक' इत्यादिना षष्ठीप्रतिषेधः। गोपायितुः रक्षितुरस्य शंतनोरष्टौ च दश च अष्टादश। 'अष्टनः संख्यायाम्' इत्यादिना अष्टन्शब्दस्य दीर्घः। 'संख्याया अल्पीयस्याः' इति पूर्वनिपातश्च। अष्टादशसंख्याकाः। अष्टौ अष्टसंख्याकाश्च। संभूय षड्विंशतिः समाः संवत्सराः। 'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः' इत्यमरः। व्यतीयुर्व्यतीताः॥ ४६॥

चरन्कदाचिन्मृगयां वनान्ते
गङ्गापगां वीक्ष्य जगाम चिन्ताम् ।
आविर्भवेदस्य जनस्य मूर्ता
सविभ्रमभ्रूरपि नाम साध्वी ॥ ४७ ॥

चरन्निति । शंतनुः कदाचिद्वनान्ते वनमध्ये मृगयां चरन्नाचरन् गङ्गापगां भागीरथीं वीक्ष्य दृष्ट्वा चिन्तां विचारं जगाम प्राप्तवान् । चिन्ताप्रकारमाह— आविर्भवेदिति । सविभ्रमे सविलासे भ्रुवौ यस्याः सा साध्वी गङ्गा मूर्ता साकारा सती अस्य जनस्य ममाविर्भवेत्प्रकटीभवेत् । अपि नाम, अपिः शङ्कायाम् । नामेति प्रसिद्धौ ॥ ४७ ॥

एतावता सूनुरनेहसा मे
वयो भजेदंसलबाहु बालः ।
समागतस्तेन कदा भवेयं
हंसेन मेघान्त इवाब्जषण्डः ॥ ४८ ॥

एतावतेति । एतावता इयताऽनेहसा कालेन । 'कालो दिष्टोऽप्यनेहाऽपि' इत्यमरः बालो मे सूनुः पुत्रः अंसलौ बलवन्तौ बाहू भुजौ यस्य तत् । 'वत्सांसाभ्यां कामबले' इति लच्प्रत्ययः । 'बलवान्मांसलोंऽसलः' इत्यमरः । वयो यौवनमित्यर्थः । 'खगबाल्यादिनोर्वयः' इत्यमरः । भजेत्प्राप्नुयात् । मेघान्ते मेघावसाने शरत्काल इत्यर्थः । हंसेन श्वेतच्छदेन । 'रविश्वेतच्छदौ हंसौ' । इत्यमरः । अब्जषण्डोऽब्जसमूह इव तेन बालेन समागतः संगतः । कदा कस्मिन्काले । भवेयं स्याम् । भवतेर्लिङ् उत्तमपुरुषैकवचनम् ॥ ४८ ॥

तस्यास्तटे कंचिदसौ युवान-
मात्मप्रतिच्छन्दमिवात्तचापम् ।
स्रोतस्यनुद्वेजितसत्त्वजातं
[1]कुर्वाणमालोकत बाणमेतुम् ॥ ४९ ॥

1. कुर्वन्तमा०

तस्या इति । असौ राजा तस्या गङ्गायाः तटे आत्तचापं धृतधनुषं स्रोतसि प्रवाहे । 'स्रोतः प्रवाहेन्द्रिययोः' इति विश्वः । अनुद्वेजितम् अभिष्ठितं सत्त्वजातं जन्तुसमूहो यस्मिन् कर्मणि तद्यथा भवति तथा । बाणसेतुं शरबन्धं कुर्वाणमात्मनः स्वस्य प्रतिच्छन्दमिव प्रतिबिम्बमिव स्थितम् । 'प्रतिरूपप्रतिच्छन्दसरूपसमसंमिताः' इति दण्डी । युवानं तरुणं कंचित्पुरुषमालोकत दृष्टवान् । 'लोकृ दर्शने' इत्यस्माल्लङ् ॥ ४९ ॥

**स विस्मयस्तब्धदृशं मुहूर्त-**
**मस्त्रेण तं केनचिदात्तमोहम् ।**
**विधाय सद्यो विबुधापगाया-**
**मन्तर्दधे भानुरिवाभ्रपङ्क्तौ ॥ ५० ॥**

स इति । स युवा विस्मयेनाश्चर्येण स्तब्धदृशं स्तिमितदृष्टिं तं राजानं केनचिदस्त्रेण संमोहनादिनेत्यर्थः । मुहूर्तमल्पकालम् । 'मुहूर्तमल्पकाले च घटिकाद्वितयेऽपि च' इति शब्दार्णवे । अत्यन्तसंयोगे द्वितीया । आत्तमोहं प्राप्ताज्ञानं विधाय कृत्वा सद्यस्तत्क्षणमेवाभ्रपङ्क्तौ मेघमालायां भानुरिव भास्कर इव । 'भानुः किरणभास्करौ' इत्यमरः । विबुधापगायामन्तर्दधे तिरोबभूव । दधातेः कर्तरि लिट् । 'अदन्तरोरुपसर्गवद्वृत्तिः' इति वचनात् अन्तःशब्दस्य धातोः पूर्वं प्रयोगः ॥ ५० ॥

**क्षणेन गङ्गा चिरविप्रयुक्ते**
**तीरस्थिते भर्तरि दत्तदृष्टिः ।**
**राशेरपां तेन सहाविरासी-**
**त्पुत्त्रेण साक्षान्निधिनेव लक्ष्मीः ॥ ५१ ॥**

क्षणेनेति । गङ्गा चिरविप्रयुक्ते चिरविरहिणि तीरस्थिते भर्तरि शंतनौ दत्तदृष्टिर्निहितदृष्टिः सती निधिना शेवधिना साक्षाल्लक्ष्मीः प्रत्यक्षश्रीरिव पुत्त्रेण सहापां राशेः पयःसमूहात्सकाशात् क्षणेनाविरासीदाविर्बभूव । 'प्रकाशे प्रादुराविः स्यात्' इत्यमरः ॥ ५१ ॥

**उपेत्य सा शंतनुमाह राजन्**
**देवव्रतो नाम सुतस्तवायम् ।**

मुनेर्वसिष्ठस्य गुरोः प्रसादा-

दासीदशेषागमपारदृश्वा ॥ ५२ ॥

उपेत्येति । सा गङ्गोपेत्यागत्य शंतनुमाह उक्तवती । आहेति लट्प्रयोगो भूतार्थे भ्रान्तिमूल इत्याह वामनः । 'आहेत्युवाचार्थेऽव्ययम्' इति धातुवृत्तौ । हे राजन्! देवव्रतो नाम देवव्रत इति प्रसिद्धस्तवायं सुतः गुरोराचार्यस्य वसिष्ठस्य मुनेः प्रसादादनुग्रहादशेषागमाः सकलशास्त्राणि । 'आगमस्त्वागतौ शास्त्रे' इति रत्नमालायाम् । तेषां पारं दृष्टवानशेषागमपारदृश्वा आसीत् । 'दृशेः क्वनिप्' इति क्वनिप् प्रत्ययः । वसिष्ठादधिगतसकलशास्त्रो बभूवेत्यर्थः ॥ ५२ ॥

गृहाण पारश्वधिकान्महर्षे-

रवाप्तदिव्यास्त्रकलापमेनम् ।

अलोकसामान्यगुणेन येन

त्वं लप्स्यसे प्रीतिमनन्यलभ्याम् ॥ ५३ ॥

गृहाणेति । परश्वधः परशुः प्रहरणमस्य पारश्वधिकः । 'परश्वधाट्ठञ्च' इति ठञ् । तस्मात्पारश्वधिकान्महर्षेर्जामदग्न्यादित्यर्थः । अवाप्तः प्राप्तो दिव्यास्त्राणामाग्नेयादीनां कलापः समूहो येन तं तथोक्तम् । 'कलापो भूषणे बर्हे तूणीरे संहतावपि' इति विश्वः । एनं पुत्रं गृहाण स्वीकुरु । ग्रहेर्लोटि 'हलः श्नः शानज्झौ' इति शानजादेशः । न विद्यते लोकेन सामान्यं सादृश्यं येषां ते अलोकसामान्या गुणा लोकोत्कृष्टगुणा बाहुबलश्रुत्यादयो यस्य तेन । येन पुत्रेणान्यैर्लब्धुमशक्यामनन्यलभ्यां प्रीतिं हर्षं लप्स्यसे प्राप्स्यसि । लभेः कर्तरि लृट् ॥ ५३ ॥

इत्यूचुषी तं परिरभ्य तस्मै

वितीर्य निर्यन्नयनाम्बुवृष्टिः ।

पदे पदे द्वावपि वीक्षमाणा

ययौ प्रवाहाभिमुखी कथंचित् ॥ ५४ ॥

इतीति । इत्यनेन प्रकारेणोचुषी उक्तवती । ब्रूञो लिटः क्वसुः । 'ब्रुवो वचिः' इति वचिरादेशः, 'उगितश्च' इति ङीप् । गङ्गा तं देवव्रतं परिरभ्यालिङ्ग्य तस्मै शंतनवे वितीर्य दत्त्वा

निर्यती निःसरन्ती नयनाम्बुवृष्टिर्यस्याः सा तथोक्ता । पदे पदे प्रतिपदम्; वीप्सायां द्विरुक्तिः । द्वावपि शंतनुं पुत्रं च वीक्षमाणा पश्यन्ती सती कथंचिन्महता प्रयासेन प्रवाहाभिमुखी ययौ जगाम ॥ ५४ ॥

[1]तस्या वियोगप्रभवं च दुःखं
विस्मृत्य स प्रीतमना नरेन्द्रः ।
पुरं प्रपेदे सह नन्दनेन
शशी बुधेनेव शरद्विहायः ॥ ५५ ॥

तस्या इति । नरेन्द्रः शंतनुस्तस्या गङ्गाया विरहप्रभवं विरहजातं दुःखं शोकं विस्मृत्य अचिन्तयित्वा, पुत्रलाभादिति भावः । प्रीतमना हृष्टचित्तः सन् नन्दनेन सुतेन सह । 'नन्दिग्रहि—' इत्यादिना ल्युप्रत्ययः । 'नन्दनो हर्षकः सुतः' इति विश्वः । पुरं हास्तिननगरं शशी चन्द्रो बुधेन रौहिणेयेन सह शरदि शरत्काले विहाय आकाशमिव प्रपेदे । 'वा तु पुंस्याकाशविहायसी' इत्यमरः ॥

कदाचिदायोजितयौवराज्ये
निधाय तस्मिन्स धुरं धरित्र्याः ।
सिन्धोः कलिन्दद्विपदानवेण्या
रोधः प्रपेदे मृगयाविनोदी[2] ॥ ५६ ॥

कदाचिदिति । कदाचिज्जातु सः शंतनुरायोजितं संयोजितं यौवराज्यं युवराजकर्म येन तस्मिन् । देवव्रते धरित्र्याः भूमेर्धुरं निधाय निक्षिप्य । मृगयाविनोदी आखेटाविहारी सन् । विनोदादिति वा पाठः । कलिन्दो नाम कश्चित्पर्वतस्तत्र ये द्विपा गजास्तेषां दानं मदजलम् । 'दानं मदजले त्यागे' इति रत्नमालायाम् । तद्युक्ता वेणी प्रवाहो यस्यास्तस्याः । शाकपार्थिवादित्वान्मध्यमपदलोपी समासः । 'वेणी तु केशबन्धे स्यान्नदीस्रोतसि कथ्यते' इति शब्दार्णवे । सिन्धोर्नद्या यमुनाया इत्यर्थः । 'सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः । रोधः कूलं प्रपेदे प्राप । 'कूलं रोधश्च तीरं च' इत्यमरः ॥ ५६ ॥

1. प्रियावियोग० 2. मृगयाविनोदात्

आघ्राय गन्धं कमपि प्रभूतं
जिज्ञासुरस्य प्रभवं नरेन्द्रः ।
तीर्त्वा भुवं योजनमात्रदूरां
ददर्श पारेनदि दाशकन्याम् ॥ ५७ ॥

आघ्रायेति । नरेन्द्रो राजा प्रभूतं प्रकृष्टं कमप्यनिर्वाच्यं गन्धं सौरभ्यमाघ्रायोपादायास्य गन्धस्य प्रभवमुत्पत्तिं जिज्ञासुर्ज्ञातुमिच्छुः सन् । जानातेः सन्नन्तात् उप्रत्ययः । योजनमात्रदूरां चतुष्क्रोशीमात्रविप्रकृष्टाम् । 'योजनं तु चतुष्क्रोश्याम्' इति विश्वः । भुवं तीर्त्वाऽतिक्रम्य पारेनदि नद्याः पारे । 'पारे मध्ये षष्ठ्या वा' इत्यव्ययीभावः । एदन्तत्वं निपातनात् 'अव्ययीभावश्च' इति नपुंसकत्वे 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वे पुनः 'अव्ययीभावश्च' इत्यनेन सूत्रेणाव्ययत्वम् । दाशकन्यां धीवरसुताम् । 'कैवर्ते दाशधीवरौ' इत्यमरः । 'कन्यायाः कनीन च' इति ज्ञापकात् 'वयसि प्रथमे' इति ङीब्न भवति । ददर्श दृष्टवान् ॥ ५७ ॥

स मन्मथानोकहमञ्जरीं ता-
मुदारगन्धामुपभोक्तुकामः ।
कस्यासि बाले दुहिता किमर्थं
कूले तटिन्या वससीत्यपृच्छत् ॥ ५८ ॥

स इति । स राजा मन्मथ एवानोकहो द्रुमस्तस्य मञ्जरीं स्तबकभूतामत एवोदारगन्धां मनोहरामोदां तां दाशकन्यामुपभोक्तुं कामो यस्य सः उपभोक्तुकामः अनुभवितुमनाः सन् । तुं काममनसोरपि इति मकारलोपः । हे बाले, कस्य दुहिता पुत्र्यसि । 'न षट्स्वस्रादिभ्यः' इति ङीप्प्रतिषेधः । तटिन्या नद्याः कूले किमर्थं वससि तिष्ठसि इत्यनेन प्रकारेणापृच्छत् पृष्टवान् ॥ ५८ ॥

पितुर्निदेशादिह दाशभर्तु-
र्नावं नदीस्रोतसि तारयामि ।
श्रुत्वेति वाचं सुदृशः प्रहृष्य-
न्नगच्छदुच्चैःश्रवसः सकाशम् ॥ ५९ ॥

तेऽरुन्धत्या समं द्यां निजतनुमहसां मण्डलैर्द्योतयन्तो
गङ्गास्रोतःसु कल्पद्रुमनवकुसुमोत्कीर्णवीचीभरेषु ।
दिङ्नागानां मदाम्बुस्रुतिभिरतितरां वासितेष्वाप्लुताङ्गाः
प्रादुर्भूताः पुरस्तात्सपदि पशुपतेः साक्षसूत्राः सवल्काः ॥ ३३ ॥

ते सूर्येण समीक्षिताः कृतनमस्कारं धरित्र्या समं
दंष्ट्रायामुषिता वराहवपुषः कल्पान्तकाले पुरा ।
स्रष्टुः सर्गविधेरनन्तरमतो धातार उक्ताः परै-
र्भुञ्जानास्तपसः फलानि सकलान्यासन्पुरस्तात्प्रभोः ॥ ३४ ॥

तेषां मध्यगता पत्युः पादमूलार्पितेक्षणा ।
बभासेऽरुन्धती साक्षात्तपःसिद्धिरिवाग्रतः ॥ ३५ ॥

दारार्थं विहितादरं स्मरहरं तेऽभ्यूचुरित्थं वचो
यद्वेदाध्ययनं हुतं च विधिवद्वन्हौ कृतं यत्तपः ।
तस्येदं फलमद्य यन्मुनिजनैर्ध्येयो भवानद्य नः
स्मृत्याऽनुग्रहणेन पात्रयति तत्सर्वोन्नताः स्मो वयम् ॥ ३६ ॥

एषाऽनुग्रहरूपिणी तव विभो प्रीतिश्च विश्वात्मन-
स्ते वेद्या न वयं तु वेदितुमिमं शक्ताः प्रभावं तव ।
ब्रूहि त्वं भगवंस्तदद्य भवता यस्मै वयं चिन्तिताः
पूर्णाशेषसमीहितस्य भवतो नेक्षामहे काङ्क्षितम् ॥ ३७ ॥

अथ स भगवानन्तकान्तकः अतिधवलैर्दशनांशुभिर्मकुटतट-घटितसुधादीधितिकान्तिमुपचिन्वंस्तान्सप्तर्षीन् प्रत्यभाषत ॥

ज्ञातं वः खलु मे कदाचिदपि नः स्वार्थाः प्रवृत्तिक्रमा
लोकार्थं हि मुनीश्वराः शृणुत मे मूर्त्यष्टकं तिष्ठति ।
तद्वैरारिकर्शितैरहमिह त्राणाय सेनापते-
रुत्पत्तिं प्रति याचितो हिमगिरिस्तद्याच्यतां पार्वतीम् ॥ ३८ ॥

कन्यार्थं वरबान्धवैः खलु हितैः कन्यापिता याच्यते
तत्साध्व्याचरितं किलोपकृतये भूयादरुन्धत्यपि ।
प्रागल्भ्यं परिणीतिकर्मणि खलु स्त्रीणां श्रुतं तत्तया
सार्धं यात हिमाचलं मुनिवराः कार्यस्य संसिद्धये ॥ ३९ ॥

विवाहाभिमुखे तस्मिन् श्रेष्ठे संयमिनां शिवे ।
विवाहलज्जां महतीं तत्यजुस्ते तपोधनाः ॥ ४० ॥

अथ तेषु सप्तसु सारुन्धतीकेषु महर्षिषु ओषधिप्रस्थं प्रति प्रस्थितेषु भगवानपि चन्द्रमकुटः पूर्वोद्दिष्टमास्पदमुपजगाम ॥

ते चाकाशमथातिनीलिम समुत्प्लुत्योपजग्मुस्तदा
प्रस्थं हैमवतं मनःसमजवाः सौत्रामणादास्पदात् ।
कौबेरादपि चारु गाङ्गसलिलैः सिक्तं समन्ताज्ज्वल-
त्सिद्धौषध्यधिकोज्ज्वलन्मणिशिलाजालं पदं संपदाम् ॥ ४१ ॥

यत्र च विगतसिंहभया गजाः अश्वमुखा एव वाजिनः वनदेवता एव पौरयोषितः शिखरावलम्बिघनगर्जितान्येव मुरजध्वनयः विलोलकल्पपादपविटपा एव गृहपताकाः स्फाटिकसौधसोपानपङ्क्तिषु ज्योतिःप्रतिबिम्बितान्येव सालभञ्जिकाः ज्योतिर्लताप्रकाशमहिम्ना अनभिज्ञाततमिस्रा अभिसारिकाः यौवनान्तमेव वयः कुसुमायुध एवान्तकः रत्यन्तनिद्रैव संज्ञाविपर्ययः प्रणयकोपकम्पमानाधरोष्ठपौरपुरन्ध्रीभ्रूलताहेतिदर्शनसंत्रासैराप्रसादसमयं कृतपादप्रणिपाता एव प्रेयसः संतानकतरुच्छायोपसुप्तविद्याधरमिथुनं गन्धमादनतलमेव बाह्योपवनमिति अवाङ्मनसगोचरो महिमातिशयः ॥

तत्कालं मुनयः पदं हिमवतो वीक्ष्यास्पदं संपदां
स्वर्गेप्सासुकृतं विडम्बनमिव स्मेरानना मेनिरे ।
आकाशादवतेरुरप्यथ पदं प्राप्ता हिमाद्रेरिमे
रेजुर्भास्वरमूर्तयो दिनकराः प्राप्ता इवोर्वीतलम् ॥ ४२ ॥

तानर्घ्यानथ तापसान्गिरिवरः प्रत्युद्ययौ पूजया
पाद्यार्घ्यादिकया भुवं विनमयन्पादक्रमोपक्रमैः ।
प्रांशुर्धातुरजोऽरुणाधरदलः कल्पद्रुबाहुर्महाश्रृङ्गोरस्कवपुर्हिमक्षितिधरः सुव्यक्तरूपो यथा ॥ ४३ ॥

अथ गिरिपतिरेतानागतानात्मगेहं
विहितमुनिजनार्हस्वासनान्प्रत्युवाच ।

अजलदमिव वर्षं निष्प्रसूनं फलं वा-
ऽननुमितमुपपन्नं दर्शनं वो विभाति ॥ ४४ ॥

मूढं बुद्धमिवायसं कनकवन्मेरिव द्यां गतं
मन्ये मां भवतामनुग्रहवशात्संपन्नसर्वेप्सितम् ।
भूतानामुपगम्यतामुपगतोऽस्म्यद्यप्रभृत्यात्मनां
शुद्ध्यर्थं यदधिष्ठितं सुकृतिभिस्तत्तीर्थमाचक्षते ॥ ४५ ॥

भवदङ्घ्रिविशुद्धवारिणा मम मूर्धन्यपि गाङ्गपाथसा ।
परिपूततमोऽस्मि वीक्षणाद्भवतां पादसमर्पणात्तथा ॥ ४६ ॥

भवत्समागमोद्भवा मुदो न मान्ति मे तनौ
विशालतायुतोन्नतावपि प्रभाववत्तमाः ।
न केवलं दरीस्थितं तमो विनुन्नमान्तरं
तमोऽपि मे भवत्प्रभासमूहसूर्यकोटिभिः ॥ ४७ ॥

किं प्राप्यं भवतां भविष्यति जनादस्मात्समस्ताशिषां
दातॄणामपि पावनाय भवतामत्रागमः सांप्रतम् ।
एवं यद्यपि किं तु तत्र भवतामाज्ञापनानुग्रहा-
द्धन्यः स्यां सकुटुम्बकोऽहमिति मे वाञ्छानुगृह्णीत माम् ॥ ४८ ॥

इत्युक्तमर्थं गिरिणा दरीभ्यः समुद्गतेन प्रतिशब्दितेन ।
तस्यापरा स्थावररूपिणी च मूर्तिर्जगाद द्विरिव प्रहृष्टा ॥ ४९ ॥

तदनु मुनिवरास्ते चोदयामासुरुक्ति-
प्रतिवचनविधासु श्लाघनीयप्रशस्तिम् ।
विदितसकलतत्त्वं चाङ्गिरःसंज्ञमुच्चै-
रयमपि गिरिराजं प्रत्युवाच प्रहृष्टः ॥ ५० ॥

औन्नत्ये गिरिराज तावकमनः शृङ्गैः समानं तव
त्वन्मूर्तिं मुनयो वदन्ति सकलाधारां परां वैष्णवीम् ।
नालम्बिष्यत चेद्भवान्भुवमिमां शेषो मृणालोपमैः
साहस्रैरपि मूर्धभिश्चिरममूं नाधास्यत प्रायशः ॥ ५१ ॥

त्वदुत्पन्ना नद्यो गिरिवर यथा सर्वभुवनं
पुनन्त्येवं श्लाघ्याः सकलगुणसंपत्समुदिताः ।
यशोधुन्यो धन्यास्तव तु महिमव्याप्तिरयते
परां पुण्यां विष्णोः सकलभुवनव्याप्त्युपमितिम् ॥ ५२ ॥

मध्ये यज्ञभुजां त्वमस्यतिगुरुः पूजासु पूज्यात्मनां
हेतुस्ते वपुरेतदत्रभवतः किं ब्रूमहे वैभवम् ।
कार्यं नः शृणु शोभनं तु तव तत्सर्वात्मकः शंकरः
पुत्रीं ते परिणेतुमिच्छति तव प्रार्थ्यं स्वतो मन्यताम् ॥ ५३ ॥

वाचेवार्थममुं महेश्वरमपि त्वं युङ्क्ष्व पुत्र्याऽऽत्मनः
लोके सद्वरसात्कृता पितृमती कन्याऽभिनन्द्या ननु ।

यानि स्थावरजङ्गमानि भुवने तावन्त्युमाशंकरौ
पूज्यौ सर्वशिवंकरौ स्वपितरौ पश्यन्तु सर्वात्मकौ ॥ ५४ ॥

प्रणम्रससुरासुरस्फुरितमौलिरत्नप्रभा-
पिशङ्कितपदाम्बुजौ प्रभवतामुमाशंकरौ ।
वधूरियमसौ शिवो वरतमो वरोऽमी वयं
तयोः परिणयार्थिनः समुदिताः समस्ता गुणाः ॥ ५५ ॥

वदिक्रियाकर्मण एव शंभोः सुता विवाहोदितमङ्गलेन ।
जगद्गुरोस्तस्य गुरुर्भव त्वं गिरे गरीयान् खलु ते प्रभावः ॥ ५६ ॥

मुनाविति वदत्यसौ नतमुखी पितुः पार्श्वगा
विलासकमले दलान्यजगणत्सलज्जस्मितम् ।
उमा हिममहीधरोऽप्ययमुदैक्षतात्मप्रिया-
मुखं खलु कुटुम्बिनां प्रकृतयः कलत्राश्रयाः ॥ ५७ ॥

अथेदमत्रोचितमिति विचार्य निश्चितधिया पित्रा हिमवता 'वत्से विश्वात्मने परमेश्वराय त्वं संकल्पिता गृहमेधिफलं च मया प्राप्तम्' इति ससंतोषमभिहिता गौरी कृतागमनकार्यान् तान् महर्षीन् सविनयलज्जास्मितविलासं प्रणनाम ॥

समीहितसमर्थनप्रगुणितादरं तद्वचो
गिरेर्मुनिपरंपरा समभिनन्द्य तं भूयसा ।

समैधयदथाशिषां फलमुखेन वादेन ता-
मुमां सहचरी मुनेरपि निजाङ्कमारोपयत् ॥ ५८ ॥

मेनां सानुनयैर्वचोभिरुचितैः साऽरुन्धती सस्मितं
जामाता भविता हरस्तव समा काऽन्या त्रिलोक्यां भवेत् ।
इत्याश्वासितमानसा समतनोद्वैवाहिकं वासरं
चाख्याय त्रिदिनात्परं मुनिवराः प्रापुः पुनः शंकरम् ॥ ५९ ॥

तेऽस्मै तत्सिद्धमर्थं सविनयमुपगम्योचिवांसो विसृष्टाः
संतुष्टेनेश्वरेण प्रकृतशुभविधावुत्सुका धामवापुः ।
ईशोऽप्येतान्यहानि प्रगुणितसुमनःकल्पकल्पान्यनैषीत्
कृच्छ्रादेवान्यमस्मात्कथमिव विवशं कुर्वतेऽमी न भावाः ॥ ६० ॥

इति श्रीभोसलकुलजलधिकौस्तुभचोलवसुंधराधुरंधरतुलजमहाराजकुमार-
शरभोजिमहाराजविरचिते कुमारसंभवमहाचम्पुकाव्ये
तृतीय आश्वासः ॥



# चतुर्थ आश्वासः

अथौषधिपतौ तदा शपदि वर्धमाने तिथौ
सुशोभनगुणस्पृहि स्वहितबन्धुभिः संयुतः ।
हिमाद्रिरकरोन्मुदा स्वदुहितुर्विवाहोदय-
प्रकारविधिमञ्जसा सकललोकसौख्यप्रदम् ॥ १ ॥

तत्कालं प्रतिसद्म कौतुकितया वैवाहिके मङ्गले
व्यग्राशेषपुरंध्रिवर्गमभवत्सान्तःपुरं तत्पुरम् ।
भास्वत्काञ्चनतोरणं प्रविलसत्सौवर्णपट्टध्वजं
संतानादिसमस्तदिव्यकुसुमैराकीर्णवीथीपथम् ॥ २ ॥

अपत्यभूम्नि सत्यपि प्रगल्भशीलसंपदा
पितुर्बभूव पार्वती सुधेव दृष्टिरञ्जनी ।
सपुत्रभर्तृसंपदः स्वबन्धुयोषितस्तु तां
सुलग्नतारवासरे प्रचक्रिरे शुभक्रियाम् ॥ ३ ॥

अभ्यङ्गादिविवाहमङ्गलविधिं चक्रुः स्वबन्धुस्त्रियः
पार्वत्या मृदुलोध्रकल्कमिलितस्नानीयचूर्णादिभिः ।
कलशालेपविधिं चतुष्कसदने वैडूर्यपीठे स्थितां
तामष्टापदकुम्भसंभृतजलैः स्नातामकुर्वन्मुदा ॥ ४ ॥

सैवं मङ्गलतूर्यनागरुचिरं स्नाता गृहीतामल-
क्षौमा वीतजलोदयेव वसुधा संफुल्लकाशा बभौ ।
निन्ये कौतुकवेदिकामथ मणिस्तम्भान्वितां मौक्तिक-
स्रङ्नद्धां सवितानकां गिरिसुता स्त्रीभिः सतूर्यस्वनाम् ॥ ५ ॥

तत्र प्राग्वदनां गिरीन्द्रतनयां कृत्वा क्षणं योषितो
भूषार्थं विललम्बिरे तदनु तामाबद्धकेशस्रजम् ।
सर्वाङ्गीणपरिष्क्रियासुललितामादर्शवीक्षोदित-
श्लाघामुन्नमिताननामकृत तन्माता सलज्जां तदा ॥ ६ ॥

मेना तां प्रणमय्य दैवतगणान्स्वान्कार्यदक्षा ततः
साध्वीनां पदवन्दनं च कलयामास स्वयं स्वां सुताम् ।
प्रेमाखण्डितमस्तु भर्तुरिति तत्क्लृप्ताशिषो भूयसी-
रर्धांशग्रहणात्स्वभर्तुरकरोत्पश्चात्तनीः पार्वती ॥ ७ ॥

अथ स तुषाराचलः स्वेच्छाविभूत्यनुगुणं तस्याः स्वसुतायाः कर्तव्यं कौतुकमङ्गलविधिमनुष्ठाय ससुहृज्जनायां संनिधापितसकलविवाहमङ्गलोपकरणायां सभायां वृषभध्वजागमनं प्रतीक्षमाणोऽवतस्थे ॥

ततः पुरभिदोऽपि तत्कुतुकमङ्गलायोचितं
प्रसाधनमुपाकृतं सकलमातृकाभिः स्वयम् ।

K. 6.

अगृह्यत हरेण तद्रचितमण्डनं गौरवा-
त्परं प्रथमभूषणं परिणतं वरस्योचितम् ॥ ८ ॥

शंभोरासीद्भसितमखिलं स्वाङ्गरागः कपालं
जातं कल्पप्रसवमृदुलं शेखरं सर्वमेव ।
क्षौमं वस्त्रद्वितयमभवच्चर्म वैयाघ्रमैभं
तार्तीयीकं तिलकितमभून्नेत्रमर्चिःकणोग्रम् ॥ ९ ॥

यथाप्रदेशसंगता भुजंगमा विभूषणी-
बभूवुरेष नूतनाशरीरमात्रगोचरा ।
फणामणिप्रभा तु या पुरा बभूव सैव सा
शिरःस्थितो विधुः परं कुतोऽभवन्न नूतनः ॥ १० ॥

साधारणे सति महेशसमाश्रयेऽपि
भस्मेन्दुचर्मभुजगेषु विधुं विहाय ।
भस्माजिनादि पररूपमवाप नेन्दु-
रन्तःस्थिता मलिनता किमु तत्र हेतुः ॥ ११ ॥

तदनु भुवनगोप्ता नन्दिहस्तावलम्बी
रुचिरतरमहोक्षं व्याघ्रचर्मावृताङ्गम् ।
निजपरिबृढभक्तिप्रह्वितोच्चैःप्रमाणं
चरमिव रजताद्रिं शीघ्रमारुह्य यातः ॥ १२ ॥

अथ गच्छन्तं महादेवमनुव्रजन्तीनां स्ववाहनक्षोभचञ्चलावतंसानां मातॄणां स्वप्रभामण्डलगौरैः मुखपङ्कजैः पद्माकरीकृतमिवान्तरिक्षमभूत् ॥

ता मातृः कनकप्रभाकवचिताः काल्यप्यनुत्थायिनी
रेजे शुभ्रकपालभूषणधरा नीलाब्दलेखेव खे ।
दूरक्षिप्ततटिल्लतासमुदया कान्ता बलाकागणैः
सेवाकालमिवेश्वरस्य गदितुं जातो मृदङ्गध्वनिः ॥ १३ ॥

तदनु किरणमाली तस्य देवस्य रम्यं
रुचिरकनकदण्डं मौक्तिकं छत्रमादात् ।
अभित इममदूराज्जह्नुजासूर्यपुत्र्यौ
कलितकनकदण्डे चामरे व्याधुनीताम् ॥ १४ ॥

तं देवं समया विधातृकमलाकान्तौ जयेति स्तुवद्वाचौ जग्मतुरीश्वरस्य हि परे मूर्ती तु तौ विश्रुतौ ।
अन्ये शक्रमुखा दिशां परिवृढास्तस्मै प्रणेमुः पुरो
भूत्वा प्राञ्जलयः शिलादजनुषा संदर्शिताः संज्ञया ॥ १५ ॥

मूर्ध्नः कम्पेन पद्मोद्भवमुचितगिरा विष्णुमन्यानमर्त्या-
नालोकेनैव देवः शशधरमकुटो मानयन्गीयमानः ।

गन्धर्वैः साप्सरोभिर्मुनिवरविहिताः स्वाशिषः शुश्रुवान्स-
न्प्रोचे प्रागेव यूयं परिणयविषये मद्वृताध्वर्युभावाः ॥ १६ ॥

अध्वानं स विलङ्घ्य सध्वनिचलत्सौवर्णघण्टावली-
ग्रीवालंकरणः सलीलमृषभश्रेष्ठो घनेषु स्खलन् ।
धून्वञ्शृङ्गयुगं हिमाचलपुरं दुष्प्रापमन्यैः क्षणा-
त्प्रातस्थ्यश्नकटाक्षरश्मिभिरिवोत्कृष्टः पुरोयायिभिः ॥ १७ ॥

तदनु मदनहन्ता पौरलोकेन दृष्टः
सपदि कुतुकभाजा स्वोन्मुखेनावतीर्य ।
वृषपरिवृढपृष्ठाद्द्रिशृङ्गादिवार्को
भवनमचलनेतुः प्राप्तवानाप्तकामः ॥ १८ ॥

प्रत्युद्गम्य समृद्धबन्धुनिवहारूढैर्गजेन्द्रैः समं
फुल्लानोकहजालकैरिव महाप्रस्थैस्तुषाराचलः ।
देवेनाखिललोकवन्दितपदद्वन्द्वेन क्लृप्तानति-
र्गीर्वाणैर्वरबन्धुभिः सह निजं वेश्माययौ स्वैरपि ॥ १९ ॥

सपुष्पवृष्टिवीथिकं सतूर्यघोषगीतिकं
पुरः सरोवरस्य सन्धराधरस्तुतोष सः ।
दिदृक्षवः पुराङ्गना महोक्षवाहमागतं
गवाक्षमार्गतस्तदा समुन्नतान्गृहान्गताः ॥ २० ॥

विहाय सदनक्रियाः सपदि शंभुवीक्षाशया
कयाचिदलकोत्करो गलितपुष्पमालोऽपि सन् ।
अबध्यत न पाणिना करधृताग्रपादां परां
प्रसाधनकरीं हठात्प्रतिषिषेध मुग्धाङ्गनाम् ॥ २१ ॥

लीलामन्दगतिं विहाय सहसा सद्यः कृतालक्तकौ
पादौ वर्त्मनि विक्षिपन्त्यतनुत क्षोणीं च सालक्तकाम् ।
एका दक्षिणमञ्जनेन नयनं संभाव्य वातायनं
प्राप्ता वामविलोचनाऽञ्जनमकृत्वैव क्षणेनापरा ॥ २२ ॥

अन्या गवाक्षकृतदृष्टिरतर्कितोत्था
विस्रस्तनीवि दधती वसनं करेण ।
एकोत्थिता त्वरितमक्रमदत्तपादा
काञ्चीं वहन्त्यनुपदं गलितां करेण ॥ २३ ॥

किरीटेन्दुज्योत्स्नाद्विगुणितसुधाकान्तिविमलां
वितन्वन्प्रासादावलिमतिविचित्रध्वजपटाम् ।
स्फुरन्मुक्ताजालोद्ग्रथितविचलत्तोरणपथं
प्रपेदे शंभुस्तद्गिरिपतिसुगुप्तं पुरवरम् ॥ २४ ॥

पश्यन्तीनां नयनसुभगं योषितां नागरीणां
शंभुं नासीन्नयनयुगलीतृप्तिरित्येतदास्ताम् ।

सर्वा ह्यासां करणसरणिः प्राप जाड्यं विनिद्रा
स्थाने तत्तं यदिदमुमया याऽङ्कशय्या भवित्री ॥ २५ ॥

क्रोधादधाक्षीत्कुसुमायुधाङ्गं न हीश्वरः किं तु मनोभवोऽमुम् ।
अनन्यसाधारणरूपमीशं पश्यन्ह्रिया न्यस्तशरीर एव ॥ २६ ॥

अनन्यलभ्यमीशानं प्राप्य जामातरं गिरिः ।
उच्चैस्तरां स्वमूर्धानं वक्ष्यति स्वयमुन्नतम् ॥ २७ ॥

अथेत्थमोषधिप्रस्थविलासिनीनां कुतूहलकथा उपशृण्वन् केयूर-चूर्णलाजमुष्टिरच्युतदत्तहस्तावलम्बः पर्वतराजभवनस्य कानिचित्कक्षान्तराण्यतीत्य समग्राऽलंकरणोपकरणां विवाहमङ्गलवेदिकां प्रविवेश ॥

तदनु सकलदेवाः साद्रयो बन्धुवर्गाः
परमऋषिसमूहा नन्दिमुख्या गणाश्च ।
पुरहरवृतपूर्वाः सप्त दिव्या मुनीन्द्राः
कनककलशपूर्णां वेदिकामन्ववात्सुः ॥ २८ ॥

विधिवददिशदस्मै विष्टराघ्यादिसर्वं
सपदि समधुपर्कं शंभवे सोऽद्रिनाथः ।
अथ शशधरचूडश्चोपनिन्ये समक्षं
गिरिदुहितुरधीशैः कन्यकान्तःपुरस्य ॥ २९ ॥

देवोऽयं द्विदुकूलसंवृततनुर्नीतो वधूं फेनिलो
वेलां वार्धिरिव व्यभात्प्रगुणितः स्वीयाननेन्दुश्रिया ।
देव्योत्फुल्लविलोचनौघकुमुदः संस्तूयमानस्तदा
लोकोऽयं शरदेव निर्मलतमः स्वान्तोदको दिद्युते ॥ ३० ॥

तयोरन्योन्यलोलानि कातराणि समागमे ।
हृद्यां ह्रीयन्त्रणां प्रापुर्लोचनानि सभान्तरे ॥ ३१ ॥

पार्वत्याः करमद्रिणाऽथ गुरुणा दत्तं सदानोदकं
जग्राहेन्दुकलाधरो गिरिसुतारूपेण गूढात्मनः ।
पुष्पेषोरिव नूत्नमङ्कुरमथो रोमाञ्चिताऽभूदुमा
शंभुः स्विन्नकराङ्गुलिर्मनसिजस्ताभ्यां समं व्यञ्जितः ॥ ३२ ॥

प्रदक्षिणकृतेरिदं मिथुनमाद्यमग्नेर्बभौ
सुमेरुसविधे मिथः सुघटितं यथाहःक्षपम् ।
परस्परकरस्पृशौ मुकुलिताक्षि तौ दंपती
वधूमथ पुरोहितो विहितलाजहोमां व्यधात् ॥ ३३ ॥

लाजधूमकृतगन्धमाननं बिभ्रती गिरिवरात्मजा बभौ ।
षट्पदोपहृतलोध्रवासनं पद्मिनीव शरदम्बुजं तदा ॥ ३४ ॥

वत्से वह्निस्तव परिणये साक्षिभावं प्रपन्नो
भर्त्रा सार्धं भव सहचरी धर्मचर्यां कुरुष्व ।

इत्यादिष्टं गुरुजनवचः प्रत्यगृह्णाद्भवानी
वर्षारम्भोद्गतमिव पयश्चातकी जातहर्षा ॥ ३५ ॥

सारुन्धतीकध्रुवदर्शनाय प्रयोज्यमानाथ गिरीन्द्रकन्या ।
दृष्टं मयेत्याननमुन्नमय्य ह्रीसंनताङ्गी कथमप्युवाच ॥ ३६ ॥

इत्थं पुरोधसा वेधसा यथाविध्यनुष्ठापितसर्वविवाहमङ्गलविधानौ तावादिमौ जगन्मातापितरौ दम्पती पुरोहितासनस्थिताय विधात्रे प्रणेमतुः ॥

वीरसूर्भव कल्याणीत्याशिषो विधिनोदिताः ।
वाचस्पतिर्गिरीशस्य तस्थावाशास्यचिन्तया ॥ ३७ ॥

सौवर्णवेदिकायां तौ रत्नासनमधिष्ठितौ ।
मङ्गलार्द्राक्षतारोपमन्वभूतां वधूवरौ ॥ ३८ ॥

लक्ष्मीः पत्रान्तलम्बि प्रचुरजलपृषन्मौक्तिकं नालदण्डं
जायापत्योः स्वहस्तस्थितकमलमुपर्यातपत्रं व्यधत्त ।
वाण्यप्येतौ समस्तागमशिखरवचोजातगीतावनावी-
द्गन्धर्वोद्गीतिरम्यं ननृतुरपि तदा देवतावारनार्यः ॥ ३९ ॥

तदा दिविषदो हरं कृतपरिग्रहं सादरं
कृताञ्जलिपुटा मुहुश्चरणयोर्निपत्याञ्जसा ।

अयाचिषत सेवनं पुनरुपात्तमूर्त्तेस्ततः
प्रसूनधनुषो हरोऽप्यमुममंस्त कार्योचितम् ॥ ४० ॥

तदनु स विधुमौलिस्तान्विसृज्यामर्षी-
न्सपदि सह भवान्या केलिगेहं जगाहे ।
विनमितवदनाब्जां लज्जया तत्र गौरीं
रुचिरनवविलासैः सस्मितामाततान ॥ ४१ ॥

सा पाणिग्रहणादनन्तरमुमा शंभुं प्रति व्रीडया
भावेनापि ससाध्वसेन सहिता रम्याकृतिः कामतः ।
उक्ताऽप्यप्रतिवाग्धृताऽपि वसने गन्तुं कृतेच्छा द्रुतं
शय्यां नाश्रयदन्यतः कृतमुखी रत्यै तथापीशितुः ॥ ४२ ॥

सपदि कपटनिद्रामीलिते शंभुनेत्रे
हिमगिरितनया तत्कैतवाज्ञा तदानीम् ।
अकृत वदनमारात्संमुखं तस्य ताव-
द्विकसति हरनेत्रेऽमीलयत्स्वस्य चक्षुः ॥ ४३ ॥

निजनाभिदेशनिहतस्तु शांभवो धरणीधरेन्द्रसुतया सकम्पया ।
रुरुधे तदोच्छ्वसितनीविबन्धनं वसनं बभूव गिरिराजजन्मनः ॥

एकान्ते निगृहीतसाध्वसमुमादिष्टा शिवः सेव्यता-
मित्यालीभिरपि प्रिये सति समायाते न तस्यास्मरत् ।

ईशेनापहृतांशुका करतलद्वन्द्वेन नेत्रद्वयं
रुद्धाऽप्यस्य तृतीयमक्षि विशदं दृष्ट्वा निरर्थश्रमा ॥ ४५ ॥

रात्रौ वृत्तं निजसहचरीः पृच्छतीरद्रिकन्या
नैवाकार्षीदवगतकथा लज्जयाऽधोमुखी सा ।
आदर्शे स्वां तनुमकलितप्रावृतिं प्रेक्षमाणा
पाश्चात्यस्य प्रतिफलितमालोक्य भर्तुर्ललज्जे ॥ ४६ ॥

पत्यौ वाल्लभ्यमस्या हिमगिरिदुहितुर्मेनकायाः स्वमातुः
प्रत्यास्थच्चित्तपीडां किल दुहितृजनस्तादृशो मातृतुष्ट्यै ।
एवं कालक्रमेणावगतरतिसुखा सा बभूवानयोस्त-
त्प्रेमान्योन्यं द्रढीयः सुरसरिदुदधिप्रीतिमप्यत्यशेत ॥ ४७ ॥

एवं तत्र हिमाचले पुरहरो मासं न्यवात्सीत्सुखं
पश्चात्तं श्वशुरं हिमाद्रिमनुमन्त्र्यैवान्यतः सोऽवसत् ।
कौबेराचलकम्पनोद्यतकरव्यापाररक्षोधिप-
ध्वानोद्भीतहिमाद्रिजाकृतपरिष्वङ्गोऽन्वभून्निर्वृतिम् ॥ ४८ ॥

मलयगिरिसमीरो धूतपाटीरवृक्ष-
प्रसरदमितगन्धः सिन्धुसंपर्कशीतः ।
सुरतविरतिजातां क्लान्तिमीशानगौर्यो-
रहरदथ सुमेरौ तौ सुखान्यन्वभूताम् ॥ ४९ ॥

स्वर्गङ्गातोयकेलिप्रभृति नवनवस्मारलीला विधाय
क्षोणीसौख्यान्यवाप्तुं विपिनमभजतां तौ महापर्वतानाम् ।
तत्रोचे शैलकन्यां पुररिपुरखिलांस्तत्प्रदेशान्प्रदर्श्य
प्रेयस्येतौ दिनान्ते विघटनसभयौ क्रन्दतश्चक्रवाकौ ॥ ५० ॥

अमी समददन्तिनः सरसि सल्लकीभञ्जन-
प्रवासितमितो जलं कमलगन्धि संगृह्णते ।
इमे च वनपल्वलं निबिडपङ्ककल्कोदर्कं
विगाह्य शमितातपाः किरय उत्तरन्त्यम्भसः ॥ ५१ ॥

पश्यैते प्रविशन्मृगाजिरतलामूलोपसिक्तद्रुमा
धूमोन्नेयहुताग्निहोत्रसमया भान्त्याश्रमाः सर्वतः ।
भानुं सामगणैः स्तुवन्ति मुनयो रथ्याश्वहृद्यस्वरै-
र्यातेऽस्तं सवितर्यसावपि शनैः सन्ध्याऽनुयातीव तम् ॥ ५२ ॥

अस्पृष्टभूमिसमुदञ्चितपार्ष्णिभागा
ब्रह्माभिमन्त्र्य कलिताञ्जलिवारिहस्ताः ।
एते द्विजा विधिवदुन्मुखमीक्षमाणा
भास्वन्तमर्घ्यविधिना परिपूजयन्ति ॥ ५३ ॥

तस्मात्त्वं मां मुहूर्तं शशिमुखि समनुज्ञातुमर्हस्यमूस्ते
सख्योऽभिज्ञा विनोदे नियमविधिमहं चोचितं कर्तुमीहे ।

इत्युक्त्वा सोऽन्वतिष्ठन्नियममथ सखीमाललापाद्रिकन्या
सन्ध्यामीशोऽपि तावन्नमति किमधिका सेति कोपं चकार ॥

विमुञ्च कोपमञ्चतस्त्वदीयमूर्तिमेव मे
न वञ्चनास्ति काचन प्रपञ्चरीतिरीदृशी ।
दृगञ्चलेन पश्य मां विरिञ्चविष्णुसेविते
न सन्तु पञ्चबाणतो व्यथा ममाद्य किंचन ॥ ५५ ॥

यातेऽस्तं सह सन्ध्यया दिनकरे सद्यश्चकोराङ्गना
शोकाग्निज्वलनात्पुरः समुदितैर्धूमैरिवाभ्रंलिहैः ।
आसीत्संतमसैर्नभःस्थलमभिव्याप्तं तथोद्देष्यतः
शीतांशोः पृषतैरिवोडुनिकरैः प्रादुर्बभूवे दिवि ॥ ५६ ॥

अयं हिमकरः करैस्तिमिरकेशपाशं द्रुतं
निगृह्य रजनीमुखं मुकुलिताब्जनेत्राञ्चलम् ।
चलद्रुचिरतारकं कुमुदचारुमन्दास्मितं
लसद्द्विरुतसीत्कृतं हरिणलोचने चुम्बति ॥ ५७ ॥

सुमुखि शशिमयूखैर्भिन्नतामिस्रमभ्रं
गजलुलितमिवाम्भः सारसं संप्रसीदत् ।
अयमपि शशलक्ष्मा त्यक्तरक्तस्वभावो
भवति विशदमूर्तिर्न स्थिरस्तद्विकारः ॥ ५८ ॥

षाण्मातुरः समभवद्भुवनस्य गोप्ता
तेनाननन्दतुरुभौ गिरिजागिरीशौ ॥ ६८ ॥

तं सेनान्यमभीप्सवो दिविषदः शक्रादयः शंकरं
नत्वा साम्बमथोचुरीश्वर भवत्पाल्या वयं सर्वतः ।
अद्यासौ किल तारकः सुररिपुर्लोकान्क्षिणोत्यन्वहं
तं हन्तुं न परः प्रभुस्तव सुतात्सेनापतिः सोऽस्तु नः ॥ ६९ ॥

एवं प्रार्थयतः सुरान्पुरहरः प्रत्यूचिवानग्रणी-
र्युष्माकं भविता हनिष्यति भवत्प्रत्यर्थिनः षण्मुखः ।
इत्युक्तास्त्रिदशाः पिनाकधनुषा सेनापतिं तं तदा
कृत्वाग्रे सहसासुरैः सह बलैर्योद्धुं प्रतस्थुर्द्रुतम् ॥ ७० ॥

सेना व्यूह्याथ सेनापतिरपि सकलाः कार्तिकेयश्चतुर्धा
वह्न्याद्यैरग्रणीभिर्वसुमुखमरुदादित्यरुद्राभिधानाम् ।
धावन्मातङ्गघण्टाघणघणरणितत्रासंजातमूर्च्छं
चित्तन्यस्तं वितन्वन्नसुरपुरवरं संननाहोग्रमूर्तिः ॥ ७१ ॥

तस्मिन्काले समस्तासुरवरसहितस्तारको मन्त्रिमुख्यैः
साकं संमन्त्र्य योद्धुं व्यवसितधिषणो दैत्यसेनापतींस्तान् ।
अभ्यूचे प्राप्तकालं ननु विदितमिदं दैत्यसेनाग्रगण्याः
सेनान्यं कार्तिकेयं पुरहरकृपया प्राप्य देवाः प्रहृष्टाः ॥ ७२ ॥

तद्युष्माभिरतिप्रचण्डचरितैरप्यत्र काले मुहुः
　　संनद्धैर्भवितव्यमत्र भवतां वक्तव्यमेतत्किमु ।
इत्येतत्प्रतिनन्द्य तारकवचो दैत्यास्तदा प्रस्थिता
　　योद्धुं कल्पितनिश्चयाः सुरबलैः साकं समस्तैरपि ॥ ७३ ॥

उत्प्लुत्योत्प्लुत्य वल्गत्तुरगखुररजोधूमधूम्रान्तरिक्षं
　　माद्यन्मातङ्गघण्टामणिनिकरघणात्कारवाचाटिताशम् ।
उच्चैः संपातधावद्रथरथिकविमुक्ताशुगाच्छादिताभ्रं
　　पादातोद्धूतशस्त्रं सुरदितिजनुषां युद्धमन्योन्यमासीत् ॥ ७४ ॥

नेदं नन्दनकाननं विशसनं नैताः सुपर्वाङ्गना-
　　स्तीक्ष्णाः शस्त्रपरंपराः समुदिताः प्रत्यर्थिमर्मच्छिदः ।
नैतत्सत्रमसृग्वसान्त्रनिकरक्रूरं महायोधनं
　　नायं गौतमदारजारचरितो नेताऽसुरस्तारकः ॥ ७५ ॥

अग्नेऽन्नं वह वाहि वात विपिने पर्जन्य गर्जाम्बरे
　　मृत्यो मर्त्यजनेषु गच्छ धनप त्वं कोशगेहे वस ।
वस्वादित्यगणा भवन्ति भवतां श्राद्धक्रियासु क्षमा
　　नो युद्धेष्विति सैनिका दितिभुवां देवानवामंसत ॥ ७६ ॥

अथेत्थमवजानतो सुरसैनिकान् निःशङ्कं प्रहरतेति सेनापतिना भवता षडाननेन चोदिताः सुपर्वसैनिकाः आसुरं नासीरमवगाह्य असुरसङ्घैः सह योद्धुमारेभिरे ॥

किं चेन्दुप्रश्रयोन्नते स्थितमभून्निम्नाश्रयं शार्वरं
सद्यः प्रस्रवदिन्दुकान्तसलिलैः शैलः स्वसानुद्रुषु ।
निद्रालून् शिखिनः करोति विगतस्वापानकाले करै-
श्चन्द्रः कल्पलतासुमानि गणयत्यानेतुमिच्छन्निव ॥ ५९ ॥

शशिमुखि तव चन्द्रश्चन्द्रिकापुष्पदाम्ना
कलयितुमिव केशान्नूनमभ्याशमेति ।
इयमपि मधुपात्रं बिभ्रती कल्पवल्ली
निजकुसुममिह त्वत्पूजनायोद्यतेव ॥ ६० ॥

तदनु मदनवृद्ध्यै पाययामास पौष्पं
मधु मधुरमुमां तामुत्तमो देवतानाम् ।
अथ गिरिवरजाता शूलपाणेर्मदेद्धा
सकलभुवनवन्द्या वश्यतामाजगाम ॥ ६१ ॥

अथ त्रिपुरभङ्गकृत्सपदि शैलराजात्मजां
करेण परिगृह्य तां प्रतिविवेश लीलागृहम् ।
स तत्र सहितस्तया प्रतिदिनं विलासं रहो
नवं नवमिवाकरोदुपगताखिलाशीरपि ॥ ६२ ॥

ब्रह्मादीनां सुराणामपि निजचरणप्रेक्षणापेक्षिणां तं
कालं द्रष्टवेतरः सन्हिमगिरितनयावल्लभो दुर्लभोऽन्यैः ।

क्रीडत्येकां त्रियामामिव दिवसगणानत्यनैषीत्सुखात्मा
सर्वेषां विष्टपानामपि सकलसुखप्राप्तये मङ्गलाय ॥ ६३ ॥

सर्वे लेखाः सपदि गिरिजाशंकरौ दीर्घकालं
तावन्योन्यं प्रकटितसुखौ संगतौ नित्यतृप्तौ ।
ध्यात्वा सेनापतिजनिकृते तुष्टुवुर्वेदवाग्भि-
र्देवोऽप्येनांस्त्रिपुरदमनः प्रोचिवान्वाचमेवम् ॥ ६४ ॥

हे देवाः काङ्क्षितं वः सुचिरमिदमतः संप्रसन्नः करिष्ये
युष्माकं काममेतं सफलमिह भवत्काङ्क्षिते को विलम्बः ।
मद्वीर्यं भूतधात्री वहतु भवतु वः कार्यमित्युक्तिमैशीं
श्रुत्वाऽनुज्ञातवन्तास्त्रिदशपरिवृढाः वीर्यधृत्यै धरित्रीम् ॥ ६५ ॥

ततोऽम्बिकाऽतिकुपिता शशाप सुखविघ्नतः ।
स्वस्त्रीष्वप्रजसो देवान्भुवं चानेकभर्तृकाम् ॥ ६६ ॥

यातेषु त्रिदशेषु शांभवमभूत्तेजः सहस्रार्कभं
तत्तेजः प्रथमं दधार धरणी गङ्गा ततोऽतःपरम् ।
उद्यत्कोटिरविप्रभः शरवणे जातः कुमारो मुखैः
षड्भिर्द्वादशभिर्भुजैश्च नयनैस्तादृग्विधैरद्भुतः ॥ ६७ ॥

तं कृत्तिकाः षडपि षण्मुखमात्मपुत्रं
स्तन्यार्पणेन विदधुस्तत एव योगात् ।

अम्नावुद्विग्नचित्ते मरुति विमुखिते यातुधानेऽतिदूने
पर्जन्ये जन्यभीते सपदि धनपतावुन्मतौ वज्रहस्ते ।
चित्रन्यस्ते यथोच्चैः शरनिकरसमुत्कृत्तदैत्येन्द्रशीर्षं
चक्रे दैतेयसैन्यं विशकलितमथो कार्तिकेयः क्षणेन ॥ ७७ ॥

तदनु दिविषदस्ते चन्द्रचूडप्रसादा-
त्सपदि विजितदैत्याः कार्तिकेयं प्रणम्य ।
निजनगरमवापुः सर्षिसङ्घाश्च लोका
विगतसकलपीडाः सौख्यवन्तो बभूवुः ॥ ७८ ॥

मातर्वाणि नमस्करोमि चरणद्वन्द्वाम्बुजं तावकं
क्षन्तव्या किल बालकेन रचिता मात्राऽऽगसां संततिः ।
यन्मेऽत्र स्खलितं मया यदपि वोत्सृष्टं त्वरागौरवा-
त्तत्सर्वं मम साहसं भगवति क्षान्त्वा प्रसन्ना भव ॥ ७९ ॥

इति श्रीभोसलकुलजलधिकौस्तुभचोलवसुंधराधुरंधरतुलजमहाराजकुमार-
शरभोजिमहाराजविरचिते कुमारसंभवमहाचम्पुकाव्ये
चतुर्थ आश्वासः ॥

॥ संपूर्णोऽयं ग्रन्थः ॥



# ॥ श्रीशंकरगुरुकुलपत्रिका ॥

# THE JOURNAL

## OF THE

# SRI SANKARAGURUKULAM, SRIRANGAM.

**Editor:** Gurubhaktasikhamani, Sastraprasarabhushana, T. K. Balasubrahmanya Aiyar, B A., Founder of Sri Sankaragurukulam, Srirangam.

**Literary Adviser:** Vidyasagara, Vidyavacaspati, P. P. Subrahmanya Sastri B. A. (Oxon), M. A., Curator, Government Oriental Manuscripts Library and Professor of Sanskrit, Presidency College, Madras.

**The Main features are:**

1. The publication of rare and hitherto unpublished works of writers of established reputation on all branches of learning bearing on Hindu Culture and Learning.
2. The reviewing of books and periodicals on current thought
3. The encouraging of the producion of original compositions in Sanskrit by contemporary writers and poets

**Annual Subscription Rs. 6/only.**

For *bona fide Vidyarthis* on production of certificate from their teacher Rs. 4/only

The Journal is now published Quarterly. If sufficient encouragement is forthcoming it is hoped to convert it into a Bimonthly and even a Monthly

**Advertisement rates are:** 1 Full page for one insertion Rs. 10/—

Do. for one year Rs. 30/—

½ page for one inserion Rs. 6/—

½ ,, for one year Rs. 20/—

THE MANAGER,

***The Journal of the Sri Sankaragurukulam,***

***SRIRANGAM.***

व्यक्तवाक्यसादृश्योक्तिर्यथा—

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव शान्तमथ वा किमतः परेण ॥

अव्यक्तवर्णसादृश्योक्तिर्यथा—

गतेऽर्धरात्रे परिमन्दमन्दं
गर्जन्ति यत्प्रावृषि कालमेघाः ।
अपश्यन्ती वत्समिवेन्दुबिम्बं
तच्छर्वरी गौरिव हुंकरोति ॥

अव्यक्तपदसादृश्योक्तिर्यथा—

चटच्चटिति चर्मणि च्छिमिति चोच्चलच्छोणिते
धगद्धगिति मेदसि स्फुटरवोऽस्थिषु ष्ठागिति ।
पुनातु भवतो हरेरमरवैरिराजोरसि
क्वणत्करजपञ्जरक्रकचकाषजन्मानलः ॥

अव्यक्तवाक्यसादृश्योक्तिर्यथा—

पिपिप्रिय ससस्वयं मुमुमुखासवं देहि मे
ततत्यज दुदुद्रुतं भभभभाजनं काञ्चनम् ।
इति स्खलितजल्पितं मदवशात्कुरङ्गीदृशः
प्रगे हसितहेतवे सहचरीभिरध्यैयत ॥

एतेन यानि साधून्यर्थवन्ति पदानि, यानि च वाक्यानि, यच्चाशक्तिजमसाधु शब्दरूपम्, ये चापभ्रंशाः, ये चानर्थका वर्णाः, याश्चाव्यक्तवर्णपदवाक्योक्तयः, तदनुकरणानां साधुत्वमुपपन्नं भवति । ननु अनुकरणं शिष्टस्य वा दानाध्ययनादेः, अशिष्टाप्रतिषिद्धस्य वा हसितहिक्कितादेः साधुत्वं भवति; न प्रतिषिद्धस्य ; यो ह्येवमसौ ब्राह्मणं हन्तीति तस्यानुकुर्वन् ब्राह्मणं हन्यात्, सोऽपि मन्ये पतितः स्यात् । नैवम् ; यश्च ब्राह्मणं हन्ति, यश्चानुहन्ति, उभौ तौ हतः ;

यस्तु खल्वेवमसौ ब्राह्मणं हन्तीति तस्यानुकुर्वन् कदलीस्तम्भं छिन्द्यान्न स मन्ये पतितः स्यात् इति। न चानुकरणमपशब्दः, अन्यो ह्यसावपशब्दपदार्थकः साधुशब्दः; न चापशब्दपदार्थकः शब्दोऽपशब्दो भवति, अपशब्द इत्येतस्याप्यपशब्दत्वप्रसङ्गात्। यः पुनरेवमसावपशब्दं प्रयुङ्क्ते, इति तस्यानुकुर्वन्नपशब्दमभिधेयेषु प्रयुङ्क्ते, सोऽपशब्दकार्येव भवति इति ॥

भावकारकाभिधायिनो धातुप्रत्ययाः कृतः; ते षोढा— लिङ्गिनः, अन्यलिङ्गिनः, स्वलिङ्गिनः, अलिङ्गिनः, शक्त्याद्यपेक्षिणः, अनुप्रयोगाद्यपेक्षिणश्च। तेषु द्रव्यवचना अणादयो लिङ्गिनः, यथा— कुम्भकारः, पङ्कजम्, धात्री, दात्रम्, कारुः, कृकवाकुः, इति। गुणवचना ण्वुलादयोऽन्यलिङ्गिनः, यथा— कारकः, कारिका, कारकम्, दर्शनीयः, दर्शनीया, दर्शनीयम्, इति। उत्पत्तावपेक्षितनियतलिङ्गाः 'स्त्रियां क्तिन्' (पा. ३. ३. ९४) इत्येवमादयः स्वलिङ्गिनः, यथा— पक्तिः, पचनम्, पाकः, व्रजः, शय्या, सुप्तम्, इति। असत्त्वभूतार्थत्वेनानुपगृहीतलिङ्गसंख्याशक्तयस्तुमुनादयोऽलिङ्गिनः, यथा— कालो भोक्तुम्, अलं कृत्वा, खलु प्रहृत्य, नावगाहे, ईश्वरोऽभिचरितोः, ईश्वरो विलिखः, इति। शक्तिहेतुमल्लक्ष्यक्रियाद्यपेक्षाः शत्रादयः शक्त्याद्यपेक्षिणः, यथा— व्रजता कृतम्, क्रियमाणं पश्य, आर्जयन् वसति, चङ्क्रम्यमाणोऽधीते, पक्ष्यन् व्रजति, भोजको व्रजति, इति। अपेक्षितानुप्रयोगतद्धिताद्यनुषङ्गा णमुलादयोऽनुप्रयोगाद्यपेक्षिणः, यथा— रैपोषं पुष्यति, चोरंकारमाक्रोशति, कारयाञ्चकार, कृत्रिमम्, व्यावक्रोशी, सांराविणम्, इति ॥

भावकारकसंबन्धिस्वार्थाभिधायिनोऽधातुप्रत्ययास्तद्धिताः; ते षोढा— अलोपिनः, लोपिनः, सर्वलोपिनः, आदेशिनः, प्रदेशिनः, अप्रदेशिनश्चेति। तेषु निरनुबन्धा अलोपिनः, यथा— अश्वत्वम्, अश्वकः, अश्वत्थामः, सभ्यः, सख्यम्, देवदत्तरूप्यः इति। सानुबन्धा लोपिनः यथा— ब्राह्मण्यम्, मृत्तिका, दाक्षिः, वैयाकरणः, स्तेयम्, कैदार्यम्, इति, येषां लुग्लुपादिभिः किमपि नावतिष्ठते ते सर्वलोपिनः, यथा— गर्गाः, चरकाः, पञ्चालाः, चञ्चा, गार्गी, सामग्री, इति। येषामायन्नादय आदिश्यन्ते ते आदेशिनः, यथा— ऐतिकायनः, कापेयम्, आत्मनीनम्, अश्वीयम्, क्षत्रियः, शाश्वतिकम्, इति। प्रकृतेरादिमध्यविषयाः प्रदेशिनः, यथा— बहुतृणम्, बहुराजा, सर्वकः, उच्चकैः, त्वयका, पचतकि, इति। तस्या एवान्त्यावयवभूता अप्रदेशिनः, यथा— वाक्त्वचम्, प्रत्युरसम्, केशाकेशि, युवजानिः, सरजसम्, निष्प्रवाणिः, इति ॥

पृथगर्थानामेकार्थीभावः समासः; स षोढा— सुबन्ताभ्याम्, तिङन्ताभ्याम, सुप्तिङन्ताभ्याम्, सुब्धातुभ्याम्, सुबन्तनामभ्याम्, नामभ्यां चेति। तेषु सुबन्ताभ्यां यथा— उपकुम्भम्, राजपुरुषः, नीलोत्पलम, अष्टाकपालः, चित्रगुः, धवखदिरौ इति। अत्र 'समर्थः

पदविधिः' (पा. २. १. १.) इति सामर्थ्ये सति समासः। सामर्थ्यं च संबन्धः। स च द्वयोरुपसर्जनप्रधानभावे भवति; न हि प्रधानयोरुपसर्जनयोरेव वा मिथोऽनपेक्षयोः संबन्धो घटते। प्रधानोपसर्जनभावश्च द्विधा— अभिधीयमानः, प्रतीयमानश्च। अभिधीयमानो व्यतिरेकविभक्तिः, यदा वैयधिकरण्यम्— कुम्भस्य समीपम्, राज्ञः पुरुषः, इति। तत्रोपकुम्भमिति पूर्वपदप्रधानोऽव्ययीभावः; राजपुरुषः इत्युत्तरपदप्रधानस्तत्पुरुषः। प्रधानमविचलितस्वार्थं प्रथमयैवाभिधीयते, उपसर्जनं पुनः प्रधानानुग्रहायाश्रितव्यतिरेकं षष्ठ्यादिभिः। इदं च सुबन्तत्व एव भवति। प्रतीयमानस्तुल्यविभक्तिः यदा सामानाधिकरण्यम्— नीलं च तदुत्पलं च नीलोत्पलम्; अष्टसु कपालेषु संस्कृतोऽष्टाकपालः, इति। अयं च 'विशेषणं विशेष्येण' (पा. २. १. ५७) इति कर्मधारयः, 'संख्यापूर्वः' 'तद्धितार्थ' (पा. २. १. ५२, ५१) इति च द्विगुत्वं विशेषणविशेष्यभावेन प्रतीयमानोपसर्जनप्रधानभावयोः सामानाधिकरण्ये स्मर्यते; तच्च तुल्यविभक्तित्वे स्यादिति सुबन्तत्व एव भवति। यदा च चित्रा गावोऽस्येत्यन्यपदार्थपरतया विशेषणविशेष्ययोः समानाधिकरणलक्षणो बहुव्रीहिः, तदाऽप्यभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः संवृत्त इति वृत्त्यवस्थायां वाक्यवैपरीत्येन चित्रा गावोऽस्येत्युपसर्जनं समासार्थश्चित्राणां गवामयमिति प्रधानभावमनुभवति; तच्च षष्ठीप्रथमान्तत्वात् सुबन्त एव स्यात्। यदा च धवश्च खदिरश्चेति प्रधानयोर्धवस्य खदिरस्य चेत्यप्रधानयोर्वा क्रियादीन् प्रतीतरेतरयोगे युगपदधिकरणवचनो द्वन्द्वः, तदाऽप्युभयत्र तुल्यविभक्तित्वमन्तरेण प्राधान्यमप्राधान्यं वा न प्रतीयते; तुल्यविभक्तित्वं तु द्वयोः सुबन्तत्व एव भवति। अतश्च सर्वत्र सुबन्तेन सह सुबन्तं समस्यते इति स्मर्यते। तिङन्ताभ्यां यथा— अश्नीतपिबता, खादतमोदता, पचतभृज्जता, उन्मृजावमृजा, आवपनिवपा, एहिरेयाहिरे, इति। अत्र 'आख्यातमाख्यातेन क्रियासातत्ये' इति मयूरव्यंसकादिपाठात् तिङन्तानां समासः स्मर्यते। अश्नीत पिबतेत्यादि यासु क्रियासु सातत्येन विद्यते, ता एवमुच्यन्ते। तन्मध्यपतितश्च तद्ग्रहणेन गृह्यते इत्युदादीनां रे इत्येतस्य चाख्यातत्वं भवति। सुप्तिङन्ताभ्यां यथा— अपचासि, प्रावर्षत्, अनुव्यचलत्, अस्तिक्षीरा, एहिवाणिजा, जहिस्तम्ब, इति। अत्र 'सह सुपा' (पा. २. १. ४) इत्यत्र तृतीययैव सहार्थस्याक्षेपे, सहग्रहणादतिरिक्ताद्योगविभागाश्रयणेन सुबन्ततिङन्ताभ्यां समासः क्रियते। स च 'नञो नलोपस्तिङ्यवक्षेपे' इति 'उदात्तवता तिङा गतिमता च' इति, 'सुबधिकारेऽस्तिक्षीरादिवचनम्' इति, 'एहीडादयोऽन्यपदार्थे' इति 'जहि कर्मणा बहुलमाभीक्ष्ण्ये समस्यते कर्तारं चाभिदधाति' इत्युपपन्नो भवति। तेनायमर्थः संगच्छते— अवक्षिप्तोऽसि न पचसि त्वमभिहितोऽपि वृषल इति; प्रकर्षेणावर्षत् इति; पश्चाद्विशिष्टं चलनमकरोत् इति; अस्ति क्षीरमस्या इति; एहि वाणिजेत्यामन्त्र्यमाणवाणिजविशिष्टा क्रियेति; जहि जहि स्तम्बमिति कर्ता योऽभिधीयते स एवमुच्यते इति। सुब्धा-

तुभ्यां यथा— संग्रामयते, अनुरुध्यते, श्रद्धा, अन्तर्धिः, परमनियौ, प्रतिभुवौ इति। अत्र— 'संग्राम युद्धे', 'अनुरुध कामे' इति समस्तयोरेव पाठः। 'आतश्चोपसर्गे' (पा. ३. ३. १०६) 'उपसर्गे घोः किः' (पा. ३. ३. ९२) इत्यङ्किविधाने प्रादिषु श्रदन्तरोरुपसङ्ख्यानम्, 'अचि श्नु धातुभ्रुवां य्वोरियङुवङौ' (पा. ६. ४. ७७) इत्यादिकार्यसिद्धये क्विबन्तस्य प्रत्ययनामधातुत्वाद्धातुत्वमिति सुब्धातुभ्यां समासो भवति। सुबन्तनामभ्यां यथा— दधिसेक्, चर्मकारः, चर्मक्रीती, धनक्रीता, ब्राह्मणाच्छंसी, सरसिजम्, इति। अत्र 'कुगतिप्रादयः' (पा २. २. १८) 'उपपदमतिङ्' (पा. २. २. १९) इत्यत्रातिङ्ग्रहणेनोभयसूत्रशेषतया व्याख्यायमानेन सुबित्येतस्य निवृत्तिः क्रियते, 'कर्तृकरणे कृता बहुलम्' (पा. २. १. ३२) इत्यत्र च कर्तृकरणयोः समासविधानादुत्तरपदस्य कृदन्ततायां लब्धायां कृद्ग्रहणादतिरिक्तात् तदन्तावस्थायामेव समासाभ्यनुज्ञाने सुपेत्येतदपि निवर्तते। ततश्च गतिकारकोपपदानां कृद्भिः सह समासः सुबुत्पत्तेः प्रागेव भवतीत्याख्यातम्; बहुलग्रहणस्य चेष्टसिद्ध्यर्थत्वात्। स क्वचिन्नामभ्यां क्वचित् सुबन्ताभ्यां क्वचिन्नामसुबन्ताभ्यां निश्चीयते। तत्र दधिसेगित्यत्रोत्तरपदस्य 'सात्पदाद्योः' (पा. ८. ३. १११) इति पदादिनिबन्धनपत्वप्रतिषेधसिद्धये, चर्मकार इत्यत्र तु पूर्वपदस्य पदान्तलक्षणनलोपार्थं सुबन्तता क्रियते। चर्मक्रीतीत्यत्र पूर्वपदं नलोपार्थमेव सुबन्तम्, उत्तरपदं तु प्रातिपदिकं क्रियते; तेन 'क्रीतात् करणपूर्वात्' (पा. ४. १. ५०) अकारान्तात् इति— ईकारः सिद्धो भवति। सुबुत्पत्तौ तु प्राक् सुबुत्पत्तेरन्तरङ्गलिङ्गसंस्कारनिमित्तष्टाबुत्पद्यमानः क्रीतस्य अकारान्ततां हृत्वा ङीषं प्रतिबध्नीयात्। धनक्रीतेत्यत्र 'सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी' इति शिष्टप्रयोगदर्शनादुत्तरपदस्य सुबुत्पत्तौ टाबुत्पत्तेराकारान्तत्वान्न ङीप उत्पत्तिः। ब्राह्मणाच्छंसी, सरसिजमित्यत्र पूर्वपदयोः साक्षात् सुपः श्रवणम्; उत्तरपदयोस्तु प्रयोजनाभावाद्विभक्तेरनुत्पत्तिरिति। नामभ्यां यथा— अश्वक्रीती, धनक्रीती, प्रवापिणी, माषवापिणी, असूर्यंपश्या राजदाराः, कृतपूर्वी कटम्, इति। अत्र अश्वक्रीती, धनक्रीती, इत्येतयोः प्राग्वदेव ङीषुत्पत्तौ विभक्त्युत्पत्तिमन्तरेणापि पञ्चकप्रातिपदिकार्थपक्षे करणत्वाविरोधः। प्रवापिणी, माषवापिणी इत्यत्र तु प्राक् सुबुत्पत्तेः समासे प्रातिपदिकस्यान्तो नकार इति 'प्रातिपदिकान्तनुम्विभक्तिषु च (पा. ८. ४. ११) इति णत्वं भवति; सुबन्ताभ्यां तु समासेऽन्तरङ्गत्वान्ङीबुत्पत्तौ ङीबत्र प्रातिपदिकान्तः न नकार इति णत्वं न स्यात्, यथा— गर्गभगिनीति। असूर्यंपश्या इत्यत्र नञ्सूर्ययोर्दृशिक्रियया संबन्धात् परस्परमसंबन्धे सामर्थ्याभावाद्विभक्त्यभावः, अत्र हि सूर्यमपि न पश्यन्तीति नञ् सूर्यकर्मिकां दृशिक्रियामपेक्षते, न सूर्यसत्ताम्; 'असूर्यललाटयोर्दृशितपोः' (पा. ३. २. ३६) इति वचनादसामर्थ्येऽपि नाम्नोरेव समासो भवति। एतेन कृतपूर्वी इत्यपि व्याख्यातम्; अत्रापि हि कृतं पूर्वं कटोऽनेनेति कृतशब्दस्य कटापेक्षायां पूर्वशब्देनासंबन्धादसामर्थ्येऽपि 'पूर्वादिनिः,' 'सपू-

वीच' (पा ५. २. ८६-८७) इति वचनात् कृतपूर्वयोरसुबन्तयोरेव समासो भवतीति स्थितम्। उपलक्षणं चेह सुबन्ताभ्यामित्यादिषु द्विवचनम्; तेन यथा द्वाभ्यां तथा त्रिभिर्बहुभिश्च समासो भवति। तत्राव्ययीभावः कर्मधारयश्च द्वाभ्याम्। यथा— अधिस्त्रि, शाकप्रति, पक्वाम्राः, पुरुषव्याघ्रः, इति। षष्ठीलक्षणः कालपरिमाणलक्षणश्च तत्पुरुषो द्वाभ्यां त्रिभिश्च। यथा— राजगवीक्षीरम्, राजगोक्षीरम्, व्यहजातः, व्यह्नजातः, इति। अत्र यदा राज्ञो गौः राजगवी तस्याः क्षीरमिति, तदा द्वाभ्याम्, यदा तु राज्ञो गोः क्षीरं राजगोक्षीरमिति, तदा त्रिभिः। तदुक्तम्— 'राजगवीक्षीरे द्विसमासप्रसङ्गः, द्विषष्ठीभावात्; सिद्धं तु राजविशिष्टाया गोः क्षीरेणाभिसंबन्धात्' राजगवीक्षीरम्, राजगोक्षीरमिति च। ननु च, गोः क्षीरं गोक्षीरम्, राज्ञो गोक्षीरं राजगोक्षीरमिति द्वितीयपक्षे भविष्यति, नैवम्, अर्थभेदात्; यथैवायं गवि यतते न महिष्यादेरपि क्षीरमात्रेण तुष्यति, एवं राजन्यपि यतते— राज्ञो या गौः, तस्या यत् क्षीरमिति; तच्चैवं न सिध्यति; एवं हि यतः कुतश्चिदागतं गोक्षीरमात्रं राज्ञः संबन्धि प्रतीयते। कथं पुनर्गोः क्षीरमप्यपेक्षमाणायाश्च राज्ञा राजानमप्यपेक्षमणायाश्च क्षीरेण समासः? उच्यते— न गौः प्रधानत्वात् तथा राजानमपेक्षते, यथा उपसर्जनत्वेन गां राजा; क्षीरमप्यविचलितस्वार्थत्वादनौत्सुक्येन न तथा गामपेक्षते, यथोद्भूतसंबन्धव्यतिरेकत्वादौत्सुक्येन गौः क्षीरम्। एवं चानुकूल्ये गमकत्वात् प्रधानसापेक्षत्वे सति समासो भवत्येव; यथा— देवदत्तगुरुकुलम्, राजपुरुषभार्या, इति। तदुक्तम्— 'भवति वै प्रधानस्य सापेक्षस्यापि समासः' इति। एवं द्वे अह्नी समाहृते व्यहः, व्यहो जातस्येति यदा समासः तदा द्वाभ्याम्, यदा तु द्वे अह्नी जातस्य व्यह्नजात इति तदा त्रिभिः। 'सुप् सुपा' इति वचनाद्वयोरेव समास इति चेत्, न; 'कालाः परिमाणिना' (पा. २. २. ५.) इति बहुवचननिर्देशात् 'सुप् सुपा' इत्येतस्मिन् गुणपदेऽपि संख्या न विवक्ष्यते; तेन त्रिष्वपि पदेषु समासाभ्यनुज्ञाने, द्विशब्दस्यापि कालसंख्यायकत्वेन कालाभिधायित्वे द्वे अह्नी जातस्येति विगृह्य जातेन परिमाणिना द्विशब्दाहःशब्दौ कालाभिधायिनौ समस्येते। पूर्वस्य पदस्योत्तरपदनिमित्तायास्तत्पुरुषसंज्ञायाः प्रवर्तनात् 'न संख्यादेः समाहारे' (पा. ५. ४. ८९.) इति प्रतिषेधाभावात् 'अह्नोऽह्न एतेभ्यः' (पा. ५. ४. ८८.) इति समासान्तसिद्धौ व्यह्नजात इति विवक्षितरूपसिद्धिः। अथ राजगोक्षीरमित्यत्रापि कथं न समासान्तः? गोशब्दस्य युगपत् पूर्वोत्तरपदापेक्षायामसामर्थ्यात्। व्यह्नजातः इत्यत्रापि तुल्यमिति चेत्, तन्न; उत्तरपदयोग एव द्विगोराम्नानात्। अपि च, द्वे अह्नी इति द्वे अपि प्रथमान्ते, राज्ञो गोरिति द्वे अपि षष्ठ्यन्ते; अस्ति च प्रथमान्तषष्ठ्यन्तयोर्विशेषः— प्रथमान्तं ह्यनुपजातव्यतिरेकत्वान्निरौत्सुक्यं नान्यदपेक्षते; षष्ठ्यन्तं पुनरुद्भूतव्यतिरेकत्वात् परोपकारायौत्सुक्येन प्रवर्तमानं नानवाप्योपकार्यं विरमति। एवं च सापेक्षत्वादसामर्थ्ये समासः कथमिति चेत्, गमकत्वात्, यथा— सूर्यमपि न पश्यन्त्यसूर्यंपश्या

राजदाराः, न पुनर्गीयन्ते अपुनर्गेयाः श्लोकाः, श्राद्धं न भुङ्क्ते अश्राद्धभोजी ब्राह्मणः, अशूद्रान्नभोजी, एवमलवणभोजी, एकान्नविंशतिः; यथा— अवतप्ते नकुलस्येव स्थितमवतप्तेनकुलस्थितं तवैतदिति। बहुव्रीहिद्वन्द्वौ द्वाभ्यां त्रिभिर्बहुभिश्च यथा— चित्रगुः, कण्ठेकालः, प्लक्षन्यग्रोधौ, पाणिपादम्, पञ्चगवधनः, मत्तबहुमातङ्गम्, शङ्खदुन्दुभिवीणाः, धवखदिरपलाशम्, इति। अत्र 'अनेकमन्यपदार्थे' (पा. २. २. २४.) बहुव्रीहिः, 'चार्थे द्वन्द्वः' (पा. २. २. २९.) इति च स्मृतिः; उक्तं च—

सुसूक्ष्मजटकेशेन सुनताजिनवाससा।
समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिध्यति॥

द्वन्द्वो यावद्भिरारब्धः प्राधान्यं तत्र तावताम्।
इतरेतरयोगे स्यात् समाहारे तु संहतेः॥

ननु च, शोभनाः सूक्ष्मा जटाः केशा अस्य, शोभनम् नतमजिनं वासोऽस्य, संजातान्यन्तेषु शितिरन्ध्राण्यस्येति कर्मधारयादिगर्भा एते बहुव्रीहयः; तत्र सुसूक्ष्मजटकेशेन सुनताजिनवाससेत्येतयोर्मध्यपदस्योत्तरपदेन पूर्वपदेन वा कर्मधारयम्, अन्त्यस्य तूत्तरपदेनैव सप्तमीतत्पुरुषं विधाय द्वयोरपि वृत्तौ बहुव्रीहिः कस्मान्न क्रियते। उच्यते— पूर्वयोः पूर्वपदेन कर्मधारयानुपपत्तिः, असमानाधिकरण्यात्; न हि द्वयोरपि विशेषणयोः सामानाधिकरण्यं भवति। उत्तरेण तु 'विशेषणं विशेष्येण' (पा. २. १. ५७.) इति सामानाधिकरण्ये भवति कर्मधारयः; किं तु न तदुत्तरकालमन्यपदार्थे विवक्षितार्थसिद्धिः; तथा हि सति, सूक्ष्मजटासंबन्धनिबन्धनमेव केशानां शोभनत्वमुपलभ्यते न तु स्वाभाविकम्, नतिनिमित्तमेव चाजिनवाससश्चारुत्वं गम्यते न तु नैसर्गिकम्। अन्त्ये पुनरन्तेषु इत्येतस्य सापेक्षत्वादसामर्थ्ये सति नोत्तरपदेन सप्तमीतत्पुरुषः; अन्तेषु शितिरन्ध्राणि इति ह्युक्ते, कस्यान्तेष्वित्यपेक्ष्यं स्यात्; तच्च शित्यर्थ उत्पद्यमाने बहुव्रीहावेवोपपन्नं भवति— संजातान्यन्तेषु सूक्ष्मच्छिद्राण्यस्येति, न पुनस्तत्पुरुषे। ननु च, दृश्यते द्वयोरपि विशेषणत्वे सापेक्षत्वे च समासः; तद्यथा— खञ्जश्चासौ कुब्जश्च खञ्जकुब्जः, भ्रातुर्भार्या भ्रातृभार्या देवदत्तस्येति। उक्तमत्राचार्यैः। किमुक्तम्? कस्य चित् खञ्जो निर्ज्ञातः कस्य चिन् कुब्ज इति प्रधानोपसर्जनभावाद्भवत्येव विशेषणविशेष्यभावः; अपि च

संबन्धिशब्दः सापेक्षो नित्यं सर्वः प्रवर्तते।
स्वार्थवत्सा व्यपेक्षाऽस्य वृत्तावपि न हीयते॥

यथा पितुः पिता पितामहो देवदत्तस्येति। इह तु सूक्ष्मजट इत्येतदन्यपदार्थे एवा-

ज्ञायते; नतमित्येतदपि क्रियाभिधायित्वेन गुणवचनत्वादाश्रितमेव भवति। सु इत्येतत्पुनरव्ययं शोभनार्थे वर्तमानं समस्यते; तस्य चास्तां द्रव्यवचनत्वम्; गुणवचनत्वेऽपि विप्रतिपत्तिः, अव्ययानामसत्त्वार्थवाचित्वात्। केचित् पुनस्तत्रापि विवदन्ते— द्योतका हि किलैते न वाचका इति; समासश्च 'सुप् सुपा' (पा. २. १. ४.) इति द्योतकानामपि भवति। मा भूत पूर्वयोः कर्मधारयः; अन्त्ये पुनरन्तशब्दस्य संबन्धिशब्दत्वेन भ्रातृभार्यादिवत् कथं न तत्पुरुषः? उच्यते— यद्यपि संबन्धिशब्दाः सापेक्षत्वेऽपि समस्यन्ते, तथाऽपि यत्र संदेहविपर्यासादयो न जायन्ते तत्रैव तदुत्पत्तिः; अत्र त्वन्तशितिरन्ध्राणीत्युक्ते सन्देहः— किमन्तेषु शितिरन्ध्राण्यस्य, उत अन्तशितिनी(तीनि)रन्ध्राणि इति। अथ यदा सुष्ठु सूक्ष्मजटाः केशाः अस्येति विग्रहः, तदा भवितव्यं पूर्वपदयोः कर्मधारयेण। न भवितव्यम्। किं कारणम्? स्वरे दोषः स्यात्; बहुव्रीहौ पूर्वपदप्रकृतिस्वरं बाधित्वा समासस्यान्त उदात्त इत्यन्तरङ्गत्वादवयवसमासस्वरः प्राप्नोति, तदाह—

सुसूक्ष्मजटकेशादौ समासावयवो यदि।
स्यात्स्यात्तत्रान्तरङ्गत्वाद्बाधकोऽवयवस्वरः॥

न चेष्यते। का पुनरत्र कर्मधारयबाधायामुपपत्तिः? 'विशेषणं विशेष्येण बहुलम्' (पा. २. १. ५७.) इति बहुलग्रहणमेव; उक्तं च—

या सामान्याश्रया संज्ञा विशेषविषया च या।
बहुलग्रहणान्नास्ति प्रवृत्तिरुभयोस्तयोः॥

अतश्च यत्र द्वे अपि विशेषसंज्ञे, तत्रोत्तरपदे नित्यमेव द्विगुर्द्वन्द्वश्च समासो भवति; तद्यथा— पञ्चगवप्रिय इति, छत्रोपानहप्रिय इति। यत्र किंचित्सामान्यं कश्चिच्च विशेषः, तत्र विकल्पेन; यथा— राजगवीक्षीरम्, राजगोक्षीरम्, इति। यत्रैकतः सामान्यमन्यतो विशेषः, तत्र न भवत्येव; यथा— सुसूक्ष्मजटकेशेन सुनताजिनवाससा, इति; अत्र बहुव्रीहिरिति विशेषसंज्ञायामवयवयोः 'विशेषणं विशेष्येण बहुलम्' इति या समाससंज्ञा सा 'सुप्सुपा' इति तत्पुरुषादिभेदापरामर्शेन भवन्ती सामान्यसंज्ञेत्युच्यते। ननु 'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्' इति महावार्तिककारः; अयमपि च तत्पुरुष एवेति कस्मादिहापि समासो न भवति? उत्तरपदोपादानात् उत्तरपद एवाम्नायते सोऽत्र तत्पुरुषो ग्रहीतव्यः; यथा द्व्यहजातः, पञ्चगवधनः इति। द्वन्द्वः पुनरनुत्तरपद एवेति बहुव्रीहिविषयेणोत्तरपदेन सर्व एव गृह्यते। किमर्थं पुनरेवमुच्यते यावता बहुलग्रहणेनैव सिद्धम्? समुदायवृत्तावयवानां मा कदाचिदवृत्तिर्भूदिति।

तथापि न वक्तव्यम्; इह द्वौ पक्षौ— वृत्तिपक्षश्च अवृत्तिपक्षश्च; यदा वृत्तिः तदा सर्वेषां वृत्तिः, यदा तु न वृत्तिः तदा सर्वेषामवृत्तिः इति। नैवम्; अस्त्यत्र विशेषः; तथाहि— पञ्चगवप्रिय इत्यादौ नास्य पञ्चसंख्यामात्रं प्रियं नापि गोमात्रम्, किं तर्हि पञ्चसंख्योपलक्षिताः काश्चिदेव गावः, यथा पञ्चाम्राः सप्तर्षयः, इति। तच्च द्विगौ पूर्वमसति दुरुपपादमेव भवति। एतेन छत्रोपानत्प्रिय इत्येतदपि व्याख्यातम्; तत्रापि युगपदधिकरणवचनद्वन्द्वमन्तरेण नाभिवाञ्छितसिद्धिः। न ह्यस्योपानन्मात्रमेव प्रियम्, अपि तु छत्रमपि; उपानच्छब्दादेव च परः प्रियशब्दो निशम्यमानः न द्वन्द्वं विना छत्रमुपग्रहीतुं शक्नोति। तस्मादनाक्षेप इति। सुसूक्ष्मजटकेशादिना च मत्तबहुमातङ्गं वनम् इत्यादावप्यनेकमेव पदमित्युक्तं भवति। अत्रापि मत्तबहवो बहुमातङ्गा इत्यपि न भवति। किं कारणम्? 'बहुगणवतुडति संख्या' (पा. १. १. २३.) इति बहुशब्दस्य संख्यावाचित्वात्, संख्यापूर्वस्य च कर्मधारयस्य द्विगुत्वात्, द्विगोः पुनः तद्धितार्थोत्तरपदसमाहारेष्वेव भावात्, यथा पञ्चकपालः, त्रिलोकहर्म्यम्, पञ्चपूली इति। कथं तर्हि सप्तर्षयः, पञ्चाम्राः इति? 'दिक्संख्ये संज्ञायाम्' (पा. २. १. ५०) इति संज्ञायामेव तद्भवति। ननु च माभूत्तद्धितार्थः उत्तरपदं वा, तथाऽपि बहुमातङ्गमिति समाहारे भविष्यति— बहवो मातङ्गाः समाहृताः बहुमातङ्गम्; ततश्च मत्तं बहुमातङ्गमस्मिन्वने तन्मत्तबहुमातङ्गं वनमिति बहुव्रीहिर्भविष्यति। उच्यते— अथ समाहार इति कः शब्दार्थः? ननु समाङ्पूर्वाद्धरतेः कर्मणि घञ्— समाह्रियत इति समाहारः। यद्येवं पञ्च कुमार्यः समाहृताः— पञ्चकुमारि, दशकुमारि— इति 'गोस्त्रियोरुपसर्जनस्य (पा. २. १. ४८)' इति ह्रस्वत्वं न प्राप्नोति। समासार्थस्यानेकत्वात्, 'द्विगुरेकवचनम्' (पा. २. ४. ९) इत्येतदपि वक्तव्यं भवति। एवं तर्हि भावसाधनो भविष्यति— समाहरणं समाहार इति। अथ भावसाधनेन किमभिधीयते? यत्तदौत्तराधर्यम्। कः पुनः पञ्चगवं पञ्चपूली, इत्यादौ गवादीनां समाहारः? यत्तदार्जनं, क्रयणम्, भिक्षणम्, अवहरणम् वा। यद्येवं विक्षिप्तेषु पूलेषु चरन्तीषु गोषु न सिध्यति। तर्हि समभ्याशीकरणं समाहारः। एवमपि पञ्चग्रामी, षण्णगरी, इत्यादेरनुपपत्तिः। किं कारणम्? अभ्याशीकरणार्थे समाहारशब्दे समिति समन्तादित्यभिविधौ वर्तते, आङाभिमुख्ये; हरतिर्देशान्तरप्रापणे इति। नावश्यं हरतिर्देशान्तरप्रापणे एव वर्तते। किं तर्हि? सादृश्येऽपि— मातुरनुहरति पितुरनुहरतीति। अथ वा— पञ्चग्रामी षण्णगरीति नेदमियत्येवावतिष्ठते, अवश्यं ह्यसौ ततः किञ्चिदाकाङ्क्षति, क्रियां गुणं वा; यदाकाङ्क्षति तदेकं समाहार इति। अयं तर्हि, भावसाधने सति दोषः— पञ्चपूली आनीयतामिति द्रव्यस्यानयनं न प्राप्नोति। नैष दोषः; तद्यथा गौरनुबन्ध्योऽजोऽग्नीषोमीय इति जातौ चोदितायां तत्रासंभवादालम्भनप्रोक्षणविशसनादीनि द्रव्ये भवन्ति, इहापि भावानयनस्यासंभवाद्द्रव्यस्यानयनं भविष्यति; अव्यतिरेकाद्वा— न हि समूहिभ्यः समाहारलक्षणः समूहो व्यति-

# ॥ दक्षिणामूर्तिस्तोत्रम् ॥

नतखेटनिशाटकिरीटतटीघटितोपलपाटलपीठतलम् ।
तटिदाभजटापटलीमकुटं वटमूलकुटीनिलयं कलये ॥ १ ॥

स्मरणं खलु यच्चरणाम्बुजयोर्भरणाय भवोत्तरणाय भवेत् ।
शरणं करुणावरुणावसथं भज बालसुधाकिरणाभरणम् ॥ २ ॥

परिकीर्णसुवर्णसवर्णजटाभ्रमदभ्रसरिच्छरदभ्ररुचिः ।
मकुटे कुटिलं घटयन्शशिनं निटिलेऽनलदृग्जटिलो जयति ॥ ३ ॥

वटभूजतटीघटितस्फटिकोपमकुट्टिमवेदितले विमले ।
स्मितफुल्लमुखं चिदुपात्तसुखं पुरवैरि महःकरवै हृदये ॥ ४ ॥

अकलङ्कशशाङ्कसहस्रसहोदरदीधितिदीपितदिग्वलयम् ।
निगमागमनीरधिनिर्मथनोदितमाकलयाम्यमृतं किमपि ॥ ५ ॥

विषभूषमपाकृतदोषचयं मुनिवेषविशेषमशेषगुरुम् ।
धृतचिन्मयमुद्रमहं कलये गतनिद्रममुद्रसमाधिविधौ ॥ ६ ॥

दृढयोगभवानुभवोत्कलिकं प्रसरत्पुलकं क्रतुभुक्तिलकम् ।
भसितोल्लसितालिकविस्फुरितानलदृक्तिलकं कलितेन्दुशिखम् ॥ ७ ॥

वद चित्त किमात्तमभूद्भवता भ्रमता बहुधा किल दिक्षु मुधा ।
निजशर्मकरं कुरु कर्म परं भवमेव भवापहमाकलय ॥ ८ ॥

वरपुस्तकहस्तमपास्ततमः श्रुतिमस्तकशस्तसमस्तगुणम् ।
मम निस्तुलवस्तु पुरोऽस्तु परं प्रणवप्रवणप्रवरानुगतम् ॥ ९ ॥

इति दक्षिणामूर्तिस्तोत्रम् संपूर्णम् ॥

# ॥ श्रीगौरीनवरत्नमालिकास्तवः ॥

वाणीं जितशुकवाणीमलिकुलवेणीं भवाम्बुधिद्रोणीम् ।
वीणाशुकशिशुपाणिं नतगीर्वाणीं नमामि शर्वाणीम् ॥ १ ॥

कुवलयदलनीलाङ्गीं कुवलयरक्षैकदीक्षितापाङ्गीम् ।
लोचनविजितकुरङ्गीं मातङ्गीं नौमि शंकरार्धाङ्गीम् ॥ २ ॥

कमलां कमलजकान्तां कलसारसदत्तकान्तकरकमलाम् ।
करयुगलविधृतकमलां विमलां कमलाङ्कचूडसकलकलाम् ॥ ३ ॥

सुन्दरहिमकरवदनां कुन्दसुरदनां मुकुन्दनिधिसदनाम् ।
करुणोज्जीवितमदनां सुरकुशलायासुरेषु कृतदमनाम् ॥ ४ ॥

अरुणाधरजितबिम्बां जगदम्बां गमनविजितकादम्बाम् ।
पालितसुजनकदम्बां पृथुलनितम्बां भजे सहेरम्बाम् ॥ ५ ॥

शरणागतजनभरणां करुणावरुणालयाब्जसमचरणाम् ।
मणिमयदिव्याभरणां चरणाम्भोजातसेवकोद्धरणाम् ॥ ६ ॥

तुङ्गस्तनजितकुम्भां कृतपरिरम्भां शिवेन गुहडिम्भाम् ।
दारितशुम्भनिशुम्भां नर्तितरम्भां पुरो विगतदम्भाम् ॥ ७ ॥

नतजनरक्षादीक्षां दक्षां प्रत्यक्षदैवताध्यक्षाम् ।
वाहीकृतहर्यक्षां क्षपितविपक्षां सुरेषु कृतरक्षाम् ॥ ८ ॥

धन्यां सुरवरमान्यां हिमगिरिकन्यां त्रिलोकमूर्धन्याम् ।
विहृतसुरद्रुमवन्यां वेद्मि विना त्वां न देवतामन्याम् ॥ ९ ॥

एतां नवमणिमालां पठन्ति भक्त्येह ये परासक्त्या ।
तेषां वदने सदने नृत्यति वाणी रमा च परममुदा ॥ १० ॥

इति श्रीगौरीनवरत्नमालिकास्तवः संपूर्णः ॥

---

# ॥ हरिहरतारतम्यशतकम् ॥

वृद्धाञ्श्रुतिस्मृतिपुराणविचारदक्षान्
निःशङ्कबुद्धिकुशलान्प्रणिपत्य नित्यम् ।
अद्वैतमेकमभजञ्श्रितभेदबुद्धिः
पृच्छाम्यहं हरिहरस्थिततारतम्यम् ॥ १ ॥

एकः समुद्रसलिले वटपत्रशायी
त्वन्यः समुद्रशरधिस्त्रिपुरप्रभेदे ।
*को वाऽनयोरधिक इत्यनुचिन्त्य वृद्धाः
सत्यं वदन्तु तमिमं वयमाश्रयामः ॥ २ ॥

एको भुजङ्गशयनः स्वपितीह नित्यमन्यो भुजङ्गकटकः खलु नृत्यतीह ॥ ३ ॥

सूनुं चकार चतुराननमेनमेकः सूतं चकार चतुराननमेनमन्यः ॥ ४ ॥

एकः पुनर्भुवि दधौ नवनीतखण्डमन्यो दधौ नवसुधामयचन्द्रखण्डम् ॥ ५ ॥

एकोऽस्ति नन्दकुटिलव्रजमन्दिरेषु त्वन्योऽस्ति मेरुशिखरस्थितकन्दरेषु ॥ ६ ॥

एकः सहस्रकमलैर्यमुपार्च्य तस्थावन्यस्तु तैरपचितः स हि मोदते स्म ॥ ७ ॥

गाढान्धकारघननीलशरीर एको ज्योत्स्नातिनिर्मलविशुभ्रकलेबरोऽन्यः ॥ ८ ॥

---

*इतःपरं प्रतिश्लोकमपि इदमेवोत्तरार्धं योजनीयम् ।

एकः कुमारमभजत्सुतरामनङ्गमन्यः प्रयाति खलु शक्तिधरं कुमारम् ॥ ९ ॥

स्त्रीरूपमाप किल पूर्वमभीष्टमेकस्त्वन्यस्तमेव समुपैत्पुरुषः स्मरत्यै ॥ १० ॥

मुष्णाति वल्लवगृहे नवनीतमेकस्त्वन्यो ददाति सुधियां परमामृतं तत् ॥ ११ ॥

एकः प्रयाति हि सकाम इति प्रसिद्धिमन्यो ययौ निहतकाम इति प्रसिद्धिम् ॥ १२ ।

एकस्य जार इति संततलोकवार्त्ता नान्यस्य तादृशविदूषितलोकवार्त्ता ॥ १३ ॥

एकस्य वार्धुषिकजीवनवृत्तिरासीदन्यस्य सर्वबहुभाग्यदवृत्तिरासीत् ॥ १४ ॥

एकस्तु बाणगतिमेत्य करप्रणोद्यस्त्वन्योऽक्षिपत्पुरजयाय तमेव बाणम् ॥ १५ ॥

एको विभाति रविचन्द्रमयद्विनेत्रस्त्वन्योऽरविन्दसखसोमशिखित्रिनेत्रः ॥ १६ ॥

एकः सदा सवितृमण्डलमध्यवर्ती त्वन्यः सदा सवितृदन्तभिदापटीयान् ॥ १७ ॥

एकस्तु दीनगजरक्षणदत्तबुद्धिरन्यस्तु मत्तगजशिक्षणदत्तबुद्धिः ॥ १८ ॥

गोपालकत्वमधिगम्य विभाति चैकस्त्वन्यो वृषाधिपतिनायक इत्यघोषि ॥ १९ ॥

ब्रह्माणमाप निजनाभिसरोज एकोऽन्यो ब्रह्मणो नखमुखेन शिरश्चकर्त ॥ २० ॥

विश्वात्मकत्वमयते खलु तत्र चैको विश्वेश्वरत्वपदवीमयते तथाऽन्यः ॥ २१ ॥

एकस्तु केशव इति प्रथितोऽस्ति लोकेऽन्यो व्योमकेश इति याति जगत्प्रसिद्धिम् ॥

एकः सुतं प्रति गिरौ हि तपश्चचार तस्मै ददौ सुतमधिक्षिति साम्बमन्यः ॥ २३ ॥

एकस्तु नैल्यमुपयाति शरीरमात्रे त्वन्यस्तदेव हि नियच्छति कण्ठमात्रे ॥ २४ ॥

एकः प्रसिद्ध इह धेनुवधं विधाय व्याघ्रं निहत्य नितरामितरः प्रसिद्धः ॥ २५ ॥

एकः सदाष्ट महिषीरुपयाति शीघ्रमन्यो बिभर्ति नितरामपि चाष्ट मूर्तीः ॥ २६ ॥

एको लुठत्यनुदिनं यमुनाजलौघेष्वन्यो दधाति शिरसा महतीं च गङ्गाम् ॥ २७ ॥

एकः सुवर्णवसनं निदधाति कट्यामन्यः सुवर्णगिरिचापमधात्कराग्रे ॥ २८ ॥

एको दधौ शिरसि बर्हिणपिञ्छमात्रमन्यो मयूरवरवाहनपुत्रहृष्टः ॥ २९ ॥

एको दधाति हृदि कौस्तुभरत्नमेकमन्यः सहस्रसुफणामणिरत्नहारम् ॥ ३० ॥
एकः स्पृशत्यनुदिनं चरणेन गङ्गामन्यो दधाति महतीति च तां स्वमूर्ध्ना ॥ ३१ ॥
इन्द्रानुजत्वत उपेन्द्र इतीड्य एक इन्द्रादिभिः सुरगणैः परिपूज्यतेऽन्यः ॥ ३२ ॥
लक्ष्मीं वहन्नपि च वाञ्छति वित्तमेको भिक्षामटन्नपि च यच्छति भाग्यमन्यः॥ ३३ ॥
एकः करेण धृतवान्किल पाञ्चजन्यमन्यस्तथैव खलु विश्वसृजः कपालम् ॥ ३४ ॥
एकस्तु माधव इति प्रथितः स्वनाम्ना त्वन्यो ह्युमाधव इति प्रथितः स्वनाम्ना ॥ ३५ ॥
वृन्दावने चरति गोभिरुपेत्य चैकस्त्वन्यो भृशं पितृवने चरतीह भूतैः ॥ ३६ ॥
एकः कदाऽपि मधुमात्रहृतिं चकार त्वन्यो महाविषहृतिं च तथा चकार ॥ ३७ ॥
एकस्तु कैटभवधे निपुणस्तथैवमन्यस्तु मृत्युहनने निपुणो नितान्तम् ॥ ३८ ॥
एको व्रजेषु कुरुते मृदुवेणुनादमन्यो लयेषु कुरुते विकटाट्टहासम् ॥ ३९ ॥
पक्षीन्द्रवाहन इति प्रथितोऽयमेकस्त्वन्यो महोक्षवरवाहन इत्यभाणि ॥ ४० ॥
एकस्तु योनिज इति ह्यगमत्प्रसिद्धिमन्यस्त्वजात इति याति जगत्प्रसिद्धिम् ॥ ४१ ॥
एकस्त्वनित्य इति सुप्रमितोऽवतारेष्वन्यस्तु नित्य इति स श्रुतिलोकसिद्धः ॥ ४२ ॥
एको ह्युलूखलनिबद्ध इति प्रसिद्धस्त्वन्योऽपि मुक्तभवपाश इति प्रसिद्धः ॥ ४३ ॥
एकस्तु पार्थरथवाजिकृतोपचारस्त्वन्यस्तु पार्थसमरप्रणुतप्रभावः ॥ ४४ ॥
व्याप्त्या च विष्णुरयमित्यनुभाष्य एकोऽन्यो विष्णुवल्लभ इति प्रथितस्त्रिलोक्याम् ॥
एको जनार्दन इति प्रकटीकृतोऽयमन्यस्तु शंकर इति स्फुटमीड्यते स्म ॥ ४६ ॥
भक्तं बलिं पुनरधःकृतवानिहैको भक्तं कुबेरमधिकाश्रियमादृतोऽन्यः ॥ ४७ ॥
व्याधादिनीचहृतनैजवधूक एको व्याधायितोऽपि निगमश्वभिराश्रितोऽन्यः ॥ ४८ ॥
नारायणः स्मृत इहाभिजनेन चैकस्त्वन्योऽपि वारि नितरां स्वतनुं चकार ॥ ४९ ॥
एकस्य सेवकजना भृशदग्धगात्रा अन्यस्य सेवकजनाः सविभूतिरेखाः ॥ ५० ॥

एको नितान्तमभवद्वटपत्रशायी त्वन्योऽभवत्खलु महावटमूलवासी ॥ ५१ ॥

एको दधौ सितमृदं तिलकं ललाटे त्वन्यो दधौ हुतभुजं तिलकं ललाटे ॥ ५२ ॥

एको दधाति तुलसीकृतमालिकां ह्यन्यो दधाति हि विधातृकपालमालाम् ॥ ५३ ॥

गोपालकैरनुसृतः सुतरामिहैको दिक्पालकैरनुसृतोऽपि दिगम्बरोऽन्यः ॥ ५४ ॥

एको गिलत्यनुदिनं नवनीतमेव त्वन्यो गिलत्यतिभयंकरकालकूटम् ॥ ५५ ॥

एको मृगाभिलषितो गहने चचार ह्यन्यो मृगं करतलेन वहन्निहास्ते ॥ ५६ ॥

एको दशास्यहृतनैजवधूक आसीत्त्वन्यो वधूविलसितार्धशरीर आसीत् ॥ ५७ ॥

एकस्तु शैलनिचयैः शरधिं बबन्ध ह्यन्यस्तमेव शरधिं शरधिं चकार ॥ ५८ ॥

एकस्तु मर्कटभटेन ददाह लङ्कामन्यः शरेण च ददाह पुरत्रयं तत् ॥ ५९ ॥

एकस्तु मर्कटभटैर्निजकार्यकारी त्वन्यः सुरेन्द्रनिवहैर्निजकार्यकारी ॥ ६० ॥

एको विवेश सरयूसलिलान्तराले त्वन्यो दधौ त्रिपथगां कणवज्जटायाम् ॥ ६१ ॥

एकः शिवं जगति पूजयति स्म सेतौ रामेश्वरोऽद्य सुजनैः परिदृश्यतेऽन्यः ॥ ६२ ॥

एकस्तु मत्स्यतनुमेत्य गतोऽब्धितोयेष्वन्यस्तु मत्स्यकलितध्वजधकप्रसिद्धः ॥ ६३ ॥

एको नृसिंहवपुरेत्य जघान दैत्यमन्यस्तमेव हतवाञ्शरभावतारः ॥ ६४ ॥

एको वटुः कपट इत्यखिलैरभाणि विद्यागुरुस्तु पर इत्यखिलैरभाणि ॥ ६५ ॥

एको विचार्य हतवानिह ताडकां स्त्रीमन्यो जघान हि मदान्धकराक्षसेन्द्रम् ॥ ६६ ॥

एकस्य पुत्रशिरसोऽप्युदितिर्न भेदे ह्यन्यस्य भक्तशिरसां मुहुरुत्थितिश्च ॥ ६७ ॥

एकस्य रावणवधे न दृढाऽस्ति शक्तिरन्यस्य सर्वविलयेऽपि दृढाऽस्ति शक्तिः ॥ ६८ ॥

एकः प्रसिद्ध इह संप्रति वासुदेवो देवो महानिति परः सततं प्रसिद्धः ॥ ६९ ॥

एकः पदेन शकटं सहसा नुनोद ह्यन्यः पदाङ्गुलिमुखेन गिरिं नुनोद ॥ ७० ॥

एकः पदत्रयमितं त्रिजगच्चकार ह्यन्यः पदाहतिहृतं त्रिजगच्चकार ॥ ७१ ॥

एकस्य रूपमधिगच्छति तामसत्वमन्यस्य रूपमधिगच्छति सात्त्विकत्वम् ॥ ७२ ॥

नीलोऽपि नीलयमुनाजलमग्न एकः शुभ्रोऽपि शुभ्रतरदिव्यधुनीधरोऽन्यः ॥ ७३ ॥

एकस्य सूनुरपि नेत्रकृशानुदग्धो ह्यन्यस्य भक्त उदितः खलु शाश्वतायुः ॥ ७४ ॥

एको वराहतनुमेत्य भुवं लिलेख ह्यन्यो भुवं पुरजये स्वरथीचकार ॥ ७५ ॥

एकश्चलां निजवधूं न शशाक रोद्धुमन्यश्चकार वनितां स्फुटमर्धगात्रे ॥ ७६ ॥

एको विभाति नितरां शिखिपिञ्छमौलिरन्यो विभाति नितरां नवचन्द्रमौलिः ॥ ७७ ॥

एकस्य सूकरजनिः सुलभाऽस्ति हीनाऽप्यन्यस्य चेच्छरभरूपमतिप्रसिद्धम् ॥ ७८ ॥

एको विभाति भृशमेकमुखाम्बुजेन ह्यन्यो विभाति भुवि पञ्चमुखः प्रसिद्धः ॥ ७९ ॥

एकश्चतुर्भुज इति प्रथितो हि लोके त्वन्यो भृशं दशभुजः प्रथितस्त्रिलोक्याम् ॥ ८० ॥

एको मुमूर्च्छ गहने हि किरातबाणाद्धासेन मूर्च्छयति तत्त्रिपुरं हि चान्यः ॥ ८१ ॥

एकस्य पादरजसैव शिला वधूः स्यात्स्त्रीपुंसरूपमयते हि जगत्परस्य ॥ ८२ ॥

एकस्त्रिपादिति भृशं जगति प्रसिद्धस्त्वन्यस्य सेवकजनोऽपि तथा प्रसिद्धः ॥ ८३ ॥

एकस्तु चक्रमधिगम्य ररक्ष लोकानन्यस्तु चक्रजनकः स्वपदाङ्गुलीभिः ॥ ८४ ॥

एकश्चकार भुवि शंकरचापभङ्गमन्यश्चकार हरिसूनुशिरोधिभङ्गम् ॥ ८५ ॥

एकस्य साधु हयवक्त्र इति प्रसिद्धिरन्यस्य पुत्र इभवक्त्र इति प्रसिद्धिः ॥ ८६ ॥

एकस्य भाति चतुरानन एव सूनुरन्यस्य भाति हि षडानन एव सूनुः ॥ ८७ ॥

आदाय वेदमदिशद्विधये पुरैको यो वेदवाजिषु विधिं विदधे हि सूतम् ॥ ८८ ॥

एको जघान नरकं सुतरामिहैकमन्यो जघान नरकान्सुतरामनेकान् ॥ ८९ ॥

एकः स्वयाचकबलिं च पुनर्ययाचे त्वन्यो ददाविह परत्र च सौख्यमेव ॥ ९० ॥

एकस्य तु व्रतमगादि चतुर्दशाब्दमन्यस्य पञ्चदशवर्षमितं व्रतं तत् ॥ ९१ ॥

स्तम्भोद्भवो नृहरिरित्यधिगम्य एको निस्तम्भमूर्तिरधिकोन्नतिरीश्वरोऽन्यः ॥ ९२ ॥

एको द्विजोऽपि निजमातृशिरश्छिदासीदन्यो विभाति नितरां द्विजराजमौलिः ॥ ९३ ॥

एकस्तु चक्रसहितोऽपि तनोति रक्षामन्यस्तु खण्डपरशुर्वितनोति शिक्षाम् ॥ ९४ ॥

शङ्खात्करोति नितरां ध्वनिमात्रमेको ढक्कात एवमितरः सकलांश्च वर्णान् ॥ ९५ ॥

एको दशाकृतिविभिन्न इति ह्यभाणि ह्यन्यस्त्वभिन्नतनुमूर्तिरिति ह्यभाणि ॥ ९६ ॥

ग्राहं निहत्य गजराजमरक्षदेको मृत्युं निहत्य मुनिपुत्रमरक्षदन्यः ॥ ९७ ॥

गोवर्धनाद्रिकनकाचलतोलनाभ्यां गोपीजनस्य जगतामभिरक्षकाभ्याम् ॥ ९८ ॥

एकः पपौ स्तनविषं खलु पूतनाया
अन्यः पपौ भुवनभीकरकालकूटम् ।
को वाऽनयोरधिक इत्यनुचिन्त्य वृद्धाः
सत्यं वदन्तु तमिमं वयमाश्रयामः ॥ ९९ ॥

अद्वैतमेव भजनीयमतोऽप्रमेयं
नित्यं निरञ्जनमनाकृति निर्विकल्पम् ।
सत्यं परात्परमखण्डचिदात्मभास-
मानन्दमच्युतमजं शिवमाश्रयामः ॥ १०० ॥

श्रीताटकान्तविबुधेन्द्रतनूभवेन
रामेश्वराध्वरिसुधीमणिना प्रणीतम् ।
लोके त्विदं हरिहरस्थिततारतम्य-
युक्त्यान्वितं हि शतकं सुधियः पठन्तु ॥ १०१ ॥

इति श्रीरामेश्वरमखिप्रणीतं हरिहरतारतम्यशतकं संपूर्णम् ॥





Sachivottama Sir C. P. Ramaswami Aiyar, Dewan of Travancore in front of the Acharyal's Temple at the Sri Sankara Gurukulam, Srirangam.



Sachivottama Sir C. P. Ramaswami Aiyar, Dewan of Travancore visiting the Sri Sacchidananda Bharati Bhandaram of Sri Sankara Gurukulam, Srirangam.




# The Journal

OF THE

# Sri Sankaragurukulam

## Srirangam

VOL. I. NO. 4.


## A FEW THOUGHTS ON SRI SANKARACHARYA.

(*Speech delivered by Sir* C. P. RAMASWAMI AIYAR, *at the Sri Sankaragurukulam, Srirangam.*)

*Mr. President and Friends,*

A few days ago I had the honour of a visit from my friend to my right (Mr. T. K. Balasubrahmanya Aiyar) whom I may claim as a hereditary family friend It is not perhaps known to many present here that I have some connection with this town of Srirangam as my mother was born in this place and though she belonged to a Smartha family, she bore the Vaishnava name of Rangammal. For some years before my birth my maternal grandfather was in Srirangam and he and my mother having spent their time in this place, I have some claims on the townships of Trichinopoly and Srirangam. So far as my friend is concerned, his family and mine have known each other for many decades and he was good enough, as I said, to come to Madras to interest the State of Travancore and myself in particular with the work that has been done here in the matter of the establishment of an institution designed to commemorate the services and the work of one of the great preceptors of humanity.

It was my good fortune this afternoon to come here and obtain physical refreshment and spiritual sustenance in the institution started by Mr. T. K. Balasubrhmanya

Aiyar. He described to me the features, the very carefully designed aspects, the symbolism that characterises the architecture and sculpture of this place and I have been deeply impressed with the enthusiasm and the love of the great Acharya which has animated my friend During his visit to Madras he stated that if I came to Trichinopoly and Srirangam I should come here and say a few words about Sankara. I agreed to do so although I realised that my pre-occupations and the scantiness of leisure, which a somewhat crowded life have made inevitable, gave very little occasion to concentrate study on the fountain sources of our scriptures. But it has been one of my great privileges to have come across, again in a hereditary capacity, two of the occupants of the spiritual throne of Sringeri. My fathe and mother both received Upadesa at the hands of the late Sri Nrisimha Bharati Swami and I count it as one of the privileges of my life to have known the late Swamiji and the present Swamiji. Fired by their example, animated by them, I have been somewhat of a close student of Sankara and what Sankara has meant to the world.

Before I go into that topic, will you allow me to take a brief conspectus of the world of today from the point of view of the philosophical appraisal of the happenings around us and the future. During the time that I was a student and during the middle age of Sir T. Desikachariar my esteemed friend, we all came to the conclusion—a tentative and provisional conclusion, albeit a strong one—that the new sciences that have altered the outer aspects of the world, the advances that had been made in the conquest of physical matter must and cannot but profoundly disturb our psychical and spiritual balance. We came to the belief that the explanation for many puzzling phenomena would be afforded by the higher Physics, Chemistry and Astronomy and the philosophy of Herbert Spencer, Darwin, Mendal, Froud and those who followed those great masters Later, however, all our pre-conceptions and the purely materialistic outlook were modified on account of the researches of a long line of illustrious scientists and thinkers; and I shall only recount the names of Einstein, Sir Arthur Edington and Sir James Jeans, in order to explain what I mean. Today those fundamentals of Science and of life, space and time which were supposed to be the basic principles of the Universe—space, time, causality, all these have assumed new shapes. Space is supposed to be a function of time; space is supposed to be infinite, yet limited. The fourth dimension is mathematically proved to exist All phenomena are relative and are functions of consciousness. Nothing is real, and it is not only the maxims of the Vedanta, but of Sir James Jeans which postulate that the teaching of modern science amounted to a realisation that all phenomena and events are a function of the mind. In other words, space does not

exist by itself and time does not exist by itself. The doctrine of relativity which we owe to Einstein had been preached 2500 years ago, or even earlier by the great Upanishad Karthas, and they affirmed that everything is imaginary but that there is one immanent mind or supreme consciousness whose Maya manifestations are the physical causations and appearances. So, as a result of laboratory experiments and mathematical calculations the earlier materialistic theories and hypothesis have vanished and we have come back to the Vedanta according to which the only thing that exists is the supreme mind of which all minds, all phenomena are a part and which is the summation, embodiment and integration of the Universe and its evolution. That is the present state of modern Science. In other words, modern Science—European and American Science—the Science that we owe to people like Einstein and Nilo Bohr has led to this conclusion, that those firm foundations on which life and the problems and phenemena of life were accepted to be based and understood to test are shifting and that a new philosophy, a new conspectus, a new appraisal of those phenomena is essential and therefore we come back to these daring speculations which have characterised the ancient sages of the world.

**THE BASIS OF OTHER FAITHS.**

Let me take you through some of the great religions of the world Amidst many differences you see the assertion of the supremacy of mind over matter and the phenomena of matter. Take Christianity which is a simple faith in a certain sense, its creed resting upon belief in the help and succour of a particularly evolved soul, Jesus Christ. We know that on the basis of the direct simple faith of the Teacher—the great Christian mystics and various thinkers who lived from the 3rd to the 11th century built up a superstructure which, if carefully examined, is not very different from the Vedanta and is to no small extent derived from Plotinus and Plato who owed a great deal to Egypt and India Take Islam. It again depends upon one or two hypotheses or doctrines of faith, namely, the universality and the oneness of God and the belief in an Apostle of God, but on the basis of that faith, simple, direct, democratic and absolutely close to the hearts and conscience of the people there has been built up the elaborate edifice of Sufism which if carefully examined in the works of Jalaluddin Rumi and Omar Khayyam will be discovered to be not very different from the Vedanta. Our faith, if you read our Vedanta literally, is also a faith which recognises certain great Powers, certain specific divinities, attributes or emanations of the divine. Bhakti, worship, love, reverence—these things lead to salvation. That is a simple faith, but as human problems became more and more complicated and people began to delve deeper and deeper below the surface, they found

that a more comprehensive synthesis was necessary and great apostles have come amongst us to perform that task. One of them was Sankara. I should not be accused of being irrelevant or comparing and contrasting the greatness and qualities of different Apostles in a spirit of laudation or disparagement. Nevertheless, Sankara presents to my mind a unique combination and the union in the same person of two qualities generally found separated. There are some who ascend to the heights of physical discipline and intellectual analysis; there are some who take a difficult path and attain the high peaks where in the rarified air of abstract thought they commune with the Infinite. Others ascend the summits by boundless love and compassion and faith. Tukaram, Kabir, Ramdoss, were examples of persons whose affection, intense longing and personal devotion to some ideal of theirs as in the case of St Francis led them to dedicate their lives and everything that they cherished to their particular ideal or Ishta Devata That is the difference between what is called Gnana and Bhakti. It is not given to everybody to unite those qualities in the same existence or body. Sankara was able to do that. He was one of the rare examples of the union of the abstract and the concrete

When you think of Sankara with what do we mainly associate him? We associate him with the great Bhashyas on the Brahma Sutras and Upanishads and Bhagavad Gita and various other commentaries which all contain the most abstract analysis, the most meticulous and microscopic examination of the phenomena of matter and spirit and evil and good and duality and oneness, with a power of analysis and introspection with the utilisation of dry and passionless thought. And yet the same person was responsible for the Dakshinamurti Stotra, the Saundarya Lahari, the Ananda Lahari and the other clinging fervid passionate Stotras and for all those manifestations of the Divine in language as impassioned as lyric, as full of rapture and personal devotion as the outpourings of the mystics of the Christian and Muhammadan religion, and of our great men like Tukaram, Kabir and those wandering generations of singers who even today are one of the glories and accompaniments of Northern India life.

**SANKARA'S GREAT CONTRIBUTION.**

That by itself is a miracle; but there is another aspect which is not always realised and recognised even by people who know the life of Sankara. Sankara is reported to have passed away when he was about 32. We in this scientific age with aeroplanes, motor cars and all conveniences find it very difficult to undertake a journey from Madras to Kashmir, but several centuries ago, the great sage Sankara started on an expedition when he was 16 to 20 according to tradition, went to Badrinath and founded one of his monasteries there, to Srinagar where he worshipped at the shrine and left his Chakra, to

Dwaraka on the borders of Kathiawar where he founded another monastery, to Puri in Jagannath where also he founded a Mutt and another amongst those forest tracts in Mysore which then was the Rishyasringa Asrama, the present Sringeri He then came to Kanchi and various other places. Not only did he do all that, but throughout his journey he controverted, disputed, he triumphed and he carried his particular gospel with him. Yet with all this tireless work he was able to find time to write some of the most exquisite poems in the Sanskrit language, exquisite alike in diction, in imagery and in outlook, was able to produce some of the most wonderful and subtle analyses of the manifestations of the human mind and mental processes. In addition, he was able to bring into actuality the Advaita doctrine which is one of the greatest solutions of the problems of human life. Whether that doctrine is held by others or not, there is no doubt that the intellectual and spiritual achievement of Lord Sankara has made a deep impression on the history of world-thought. It has made an impress on many religions and cults which has not been openly acknowledged.

#### HINDUISM—A GOLDEN UMBRELLA

Hinduism, as so many people have said in terms of criticism, and as I repeat in terms of justification and praise, is a great golden umbrella which shelters many forms of thought, many practices and many approaches to the Divine. Underneath that golden umbrella there is space for the doubter, the Charvaka, for the believer in the doctrine of stern predetermination of the Buddha. There is space for the pursuit of the personal God. There is space for that renunciation of everything including personal Godhead and the identification of the Supreme Self with one's self which is synonymous with the Vedanta That is a great and golden umbrella that has sheltered all forms of thought and speculation and it is an umbrella which is still standing notwithstanding the fury of the elements and those batterings and shatterings which have affected other forms of thought. Its stability is in no small sense due to the work of Sankara, because it was given to him to reconcile all the aspects and in his Bhashyas and in his poems what he has sought to do is to give explanations which comprehend the actualities of life at the same time that they reach above and beyond them to a synthesis typified in the four Maha Vakyas of the Upanishads identifying the Universe with the Self that is both within and beyond it and explaining existence and death and action by the theory of Maya.

#### THE MAN AS HE WAS.

We know very little of the great personage, but one may try to collect, not from any biographical works, but from his minor poems and fragments, a kind of picture of the man as he was. It is very difficult in the case of Hindu savants and philosophers to get the real picture because neither our great authors nor our great artists sought to obtain personal glory or immortality of fame. In a certain poem

